॥ श्रीः ॥

# सिद्धान्तचन्द्रिका ।

## (वेदान्तः)

श्रीरामानन्दसंयमिसंप्रणीता
गङ्गाधरयतिकृतेन व्याख्यानेन संयुता



मुम्बई

श्रीकृष्णदासाङ्गज-

गङ्गाविष्णु खेमराजो।

"श्रीवेङ्कटेश्वर" मुद्रायन्त्रम् ।

मुद्रणमस्य पुस्तकस्य गोपालनारायणजनतायन्त्रालये ।

# सिद्धान्तचन्द्रिका ।

ॐ श्रीगणेशाय नमः ।

श्रीरामभद्रसंयमिचरणौ ।
शरणं विधाय बोधाय ॥

प्रणमदमरमौलिभास्फुरद्रत्नरश्मि- ।
प्रकरविमलदीपैर्नित्यनीराजिताङ्घ्रिः ॥
शिशिरकिरणधारी योगिहृत्पद्मचारी ।
कृपयतु मयि साम्बः कोऽपि सचित्कदम्बः ॥ १ ॥

श्रीरामसंयमीन्दोः सान्द्रां सिद्धान्तचन्द्रिकां प्रपिबन् ।
प्रथयति गङ्गाधरयतिभव्यचकोरस्तदुक्तोद्गारान् ॥ २ ॥

इह खलु बहुतरभवपरम्परार्जितसुकृतपरिपाकजनितवैराग्यादिसाधनसम्पन्नमुमुक्ष्वभिलषितमोक्षोपायब्रह्मात्मैक्यज्ञाननिदानं सर्ववेदान्तसिद्धान्तसारसङ्ग्रहरूपं प्रकरणं चिकीर्षुरत्रभवानाचार्यश्चिकीर्षितस्य निर्विघ्नपरिसमाप्ति-प्रचयगमनाय श्रीगुरुदैवतैक्यमतिसन्धानरूपं तन्नमस्कारलक्षणं मङ्गलमाचरन्नर्थादनुबन्धचतुष्टयं सूचयन् चिकीर्षितं प्रतिजानीते ।

श्रीरामभद्रेति । श्रीरत्र लक्ष्मीः त्रयी च । "ऋचः सामानि यजूंषि सा हि श्री रमृता सताम्" । इति श्रुतेः । श्रीमतो रामभ-

सिद्धान्तचन्द्रिकामृतसेकैः ।
संशोधयामि चेतः स्वम् ॥ १ ॥

---

इस्य तन्नाम्नः संयमिनः चरणौ इह गुरु-देवतयोरेकाभिधानोपात्तत्वादैक्यमभिहितम् । एकस्मिन्विषये धारणा-ध्यान-समाधय संयम. । तदुक्तं भगवता पतञ्जलिना ।

देशबन्धश्चित्तस्य धारणा ॥ १ ॥

तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥

तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि. ॥ ३ ॥

उभयमेकत्र संयम इति बोध प्रतिबोधकेभ्यो

---

१ 'देशे' नाभिचक्र-नासाग्रादौ, चित्तस्य 'बन्ध ' विषयान्तरपरिहारेण यत् चित्तस्य स्थिरीकरण, सा 'चित्तस्य धारणा । इति उच्यते । अयमर्थ । मैत्र्यादिचित्तपरिकर्मवासितान्त. करणेन, यम-नियमवता, जितासनेन, परिहृतप्राणविक्षेपेण, प्रत्याहृतेन्द्रियग्रामेण, निर्बाधे प्रदेशे, ऋजुकायेन, जितद्वन्द्वेन योगिना नासाग्रादौ सम्प्रज्ञातस्य समाधेरभ्यासाय चेतस स्थिरीकरणं कर्तव्यमित्यर्थ । अत्र 'चित्तधारणा' इत्यपि पुस्तकान्तरे पाठान्तर दृश्यते ।

२ 'तत्र' तस्मिन् देशे यत्र चित्त धृत तत्रेत्यर्थ । 'प्रत्ययस्य' ज्ञानस्य 'एकतानता' विसदृशपरिणामपरिहारद्वारेण यदेव धारणायामालम्बनीकृत तदालम्बनतयैव नित्यमुत्पत्ति', सा 'ध्यान' इत्युच्यते । ध्येयविषये चित्तस्य एकतानत्व ध्यानमित्यर्थ ।

३ 'तदेव' उक्तलक्षण ध्यानम् । यत्र 'अर्थमात्रनिर्भासं' अर्थाकारसमावेशादुद्भूतार्थरूप, न्यग्भूतज्ञानरूपत्वेन 'स्वरूपशून्यमिव' आपद्यते स 'समाधि' इत्युच्यते । सम्यक् आधीयते एकाग्रीक्रियते विक्षेपान् परिहृत्य यत्र मन स समाधिरित्यर्थ ।

श्रीगुरुकृपाकटाक्षात् ।
सारं शास्त्रस्य सकलमाकलयन् ॥

---

रक्षकं विधाय प्रतियोगिकरक्षकोत्कर्षबुद्धिरूपमानसनमस्कारलक्षणं मङ्गलमाचरितम् । बोधाय आत्मतत्त्वसाक्षात्काराय सिद्धान्तचन्द्रिकामृतसेकैः सिद्धान्तो वेदान्ततात्पर्यार्थः इतरेषामप्रामाणिकत्वेन सिद्धान्ताभासत्वात् । तस्य चन्द्रिकेव चन्द्रिका आह्लादपूर्वकप्रकाशकत्वादन्वर्थनामाऽयं देशिकोपदिष्टार्थसङ्कलनात्मकः स्वकर्तृको ग्रन्थः स एवामृतं आत्यन्तिकमृत्युनिर्हरणात् । तस्य सेकैरिव सेकैः तदर्थानुसन्धानैः स्वं स्वीयं चेतः चित्तं संशोधयामि असम्भावनादिमालिन्यनिरासेन विशदीकरोमि । अत्र कृतकृत्यस्यापि बोधायेति संशोधयामीति च विनयोक्तिरिति बोध्यम् । अस्य वेदान्तप्रकरणत्वात् तदीयैरेव विषयादिभिस्तद्वत्त्वं सूचितम् । तत्र हि ब्रह्मात्मैक्यं विषयः प्रोक्तः । प्रयोजनं तत्कामोऽधिकारी बोधकत्वं च सम्बन्ध इति स्थितं तदत्रापि बोधायेत्यनेन बोध्यम् । ब्रह्मात्मैक्यं विषयः । तदेव च बुद्धं सत् प्रयोजनम् । बोधक-बोध्यत्वरूपः सम्बन्धः । तत्प्रयोजनकामोऽधिकारीति लभ्यते ॥ १ ॥

*न केवलमस्य ग्रन्थस्य बोधः फलं, किन्तु विस्तृतशास्त्राभ्यासालसानां शास्त्रसकलार्थसङ्ग्रहतया साहित्यरसगर्भितत्वेन सुखश्रवतया च विनैव श्रमं निःश्रेयसप्राप्तिरपि इत्यभिप्रेत्य फलपर्यवसायि विद्वत्साक्षिसंवादं प्रस्तौति ।*

*श्रीगुर्विति* । इह संसारमण्डले कश्चित् विरक्तः "आश्रयो य-

सुकृती कृतीह कश्चित् ।
श्रुतिसुखमित्थं जगौ मिथः सुहृदे ॥ २ ॥

ज्ञा" इति श्रुतेः । सुकृती कृतपुण्यपुञ्जः अत एव कृती दुराधिगमत्वसाक्षात्कारे, तस्य च शिष्येषु सद्यः समर्पणे कुशलः पुरुषधौरेयः । "कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते" इति स्मृतेः । "आश्चर्यो ज्ञाता कुशलाऽनुशिष्टः" इति श्रुतेश्च । श्रीगुरुकृपाकटाक्षात् श्रीगुरोः कृपयैव यः कटाक्षः तस्मात् । अनेन कृतकृत्यस्य निरतिशयानन्दतृप्तस्य श्रीगुरोः नैरपेक्ष्येऽप्यनुग्रहादेव नैसर्गिका दीनोद्धरणे प्रवृत्तिः इति दर्शितम् । शास्त्रस्य हितस्य शासनात् शंसनाद्वा वेदान्तः शास्त्रं तस्य सकलं समग्रं सारं तात्पर्यविषयमर्थं आकलयन् करतलामलकवदपरोक्षयन् सन् श्रुतिसुखं "यो वै भूमा तत्सुखम्" इत्यादिश्रुतिप्रसिद्धम् । सुखं श्रोतृसुखं यथा स्यात्तथेति क्रियाविशेषणं वा । मिथः रहसि अतिगोप्यत्वात् । "सुहृदे शुद्धचित्ताय आत्मभक्ताय प्रशान्ताय शमान्विताय" इति श्रुतेः । "नाभक्ताय कदाचन" इति स्मृतेश्च । इत्थं वक्ष्यमाणप्रकारेण जगौ गीतिच्छन्देनोपदिदेश ॥ २ ॥

१ माधवाचार्यस्तु जैमिनीयन्यायमालाविस्तरे—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

इत्युक्तम् । तथापि प्रवृत्ति-निवृत्तिद्वारा हितशंसनोपदेश इति सर्वं समञ्जसम् ।

चित्रमकृत्रिममेकम् ।
ज्योतिर्निहितं गुहास्वसङ्ख्यासु ॥
तदुपरि किमपि तमिस्रम् ।
त्रैलोक्यमदो+ विविच्य दर्शयति* ॥ ३ ॥

बन्धस्यात्मतत्वाज्ञाननिबन्धनस्य तज्ज्ञानैकनिवर्त्यत्वात् ज्ञानस्य च तत्वमस्यादिज्ञानैकसाध्यत्वात् वाक्यार्थज्ञानस्य च पदार्थज्ञानाधीनत्वात् प्रथमं तत्पदार्थं स्वरूप-तटस्थलक्षणाभ्यां निरूपयति ।

चित्रमित्यादिना । अकृत्रिमं कृत्रिमं काल्पनिकं तद्विलक्षणं सत्यमित्यर्थः। एकं अद्वितीयं त्रिविधपरिच्छेदशून्यमिति यावत् । ज्योतिर्ज्ञानस्वरूपं ब्रह्म । अनेन पदत्रयेण स्वरूपलक्षणोक्त्या तत्पदलक्ष्यमुक्तम् । ननु कथं अस्याद्वितीयत्वं? जीवानां भेदेन सत्वात् । अत आह निहितमित्यादिना । असङ्ख्यासु गुहासु बुद्धिलक्षणासु तत्संस्काराविच्छिन्नप्रदेशलक्षणासु अविद्यालक्षणास्वेव वा निहितं सन्निहितं स्थितमिति यावत् । ब्रह्मण एव बुद्ध्यादिप्रतिबिम्बितत्वात् तदवच्छिन्नत्वाद्वा जीवव्यपदेशभाक्त्वमिति नाद्वैतविरोध इति भावः । तथाच श्रुतिः। "सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद-निहितं गुहायाम् । परमे व्योमन्" इति । ननु तर्हि बुद्ध्याद्युपाधिभिरे-

+ 'त्रैलोक्यमिदन्तयैव' इति 'ग.' पुस्तके ।

* 'कारयति' इति 'क.' पुस्तके ।

च सद्वितीयत्वमित्याशङ्क्य तटस्थलक्षणोक्तिमुखेन परिहरति । तद्वपरीत्यादिना । तस्य ज्योतिष उपरि किमपि आनिर्वचनीयं अतर्क्यानन्तशक्तिकं च । तामिस्रमिव तामिस्रं स्वाश्रयावरकमज्ञानं कर्तृ । अदः प्रत्यक्षादिप्रमाणसन्निधापितम् । त्रैलोक्यं स्वपरिणामभूतलोकत्रयशरीरं विराजम् । सूत्रात्मनोऽप्युपलक्षणमेतत् । विविच्य प्रतिपदार्थं भेदं प्रकल्प्य दर्शयति प्रत्याययति । अनेन विक्षेपकत्वमुक्तम् । तथा चोपाधीनामाविद्यकत्वेन मिथ्यात्वान्न तैरपि सद्वितीयत्वमिति भावः । अनेन च प्रपञ्चाकारपरिणामाभ्यां अविद्याधिष्ठानत्वरूपविवर्तोपादानत्वं ज्योतिः परामर्शितम् । तच्छब्दसूचितसर्वावभासनक्षमचित्स्वरूपलब्धसार्वज्ञनिर्वाह्यसर्वकर्तृत्वरूपनिमित्तत्वसहकृतसदभिन्ननिमित्तोपादानत्वपर्यवसितं तटस्थलक्षणमुक्तं भवति । तथा हि श्रुतिः । "तदात्मानं स्वयमकुरुत" इति । एवं च अर्थात्तत्पदवाक्यार्थौ दर्शितः । उपक्रमगतं चित्रपदं यथायोग्यं सर्वत्र सम्बध्यते । तथा हि । वाङ्मनसागोचरस्य स्वप्रकाशचिदेकरसात्मतत्वं स्वतश्चित्रम् । "विभुं चिदानन्दरूपमद्भुतम्" इति श्रुतेः । तस्य च असङ्गाऽद्वितीयस्य प्रतिबुद्ध्यादिपर्यावर्तनं ततोऽपि चित्रम् । तस्मिन्नेव च अज्ञानविरोधिनि अज्ञानाश्रयत्वं ततोऽपि चित्रम् । अज्ञानस्य च स्वतो निःसत्ता-स्फूर्तिकस्य त्रैलोक्यात्मना स्वप्रदर्शकत्वं ततोऽपि चित्रम् । अर्थान्तरे तु लौकिकदीपादिज्योतिषो ऽकृत्रिमत्वं चित्रम् । तस्य चैकस्यानेकगृहानिहितत्वं ततो ऽपि चित्रम् । तस्मिंश्च तमिस्राविरोधिनि तमिस्राश्रयत्वं ततोऽपि चित्रम् ।

दीपः कोऽपि समिन्धे ।
स्नेह*-दशाधारहीन अस्पन्दः† ॥

तमिस्रस्य च दर्शनविरोधिनो विविच्य त्रैलोक्यप्रदर्शकत्वं ततोऽपि सुतरां चित्रमिति । इह च ज्योतिषो गुहासु निहितमिति प्रत्यक्त्वोक्त्या प्रपञ्चस्य ब्रह्मविवर्तत्वं तदज्ञानपरिणामत्वोक्त्या च साङ्ख्याभिमतं पुरुषनानात्वं वैशेषिकाद्यभिमतमीश्वरताटस्थ्यं तत्कल्पितं प्रधानपरमाणूपादानत्वं च "एको देवः सर्वभूतेषु गूढः । रूपं[1] रूपं प्रतिरूपो बभूव । इन्द्रो[2] मायाभिः पुरुरूप ईयते । मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इत्यादिश्रुतिविरोधान्निरस्तमिति वेदितव्यम् ॥ ३ ॥

ननु जीवाभेदे परस्य पारतन्त्र्याद्रागादिदोष-जागराद्यवस्था-स्थूलादिभोगाय तनूत्क्रान्त्यादिक्रियाप्रमुखसांसारिकधर्मप्रसक्त्या मायानियन्तृत्वेन जगन्निर्मातृत्वानुपपत्तिरित्यत आह ।

---

* 'तैल-' इति 'ख.' पुस्तके ।

† तैल-दशाधारहीनमस्पन्दम्' इति 'ग.' पुस्तके ।

१ अस्याः श्रुतेरयमर्थः । स एव हि भगवान् नाम-रूपे व्याकुर्वाणो 'रूपं रूप प्रतिरूपो बभूव' तस्य आत्मनः ख्यापनाय शास्त्राचार्यादिभेदेन तत्प्रकाशनायेत्यर्थः । यदि हि नाम-रूपे न व्याक्रियेते तदा अस्य आत्मनः नाम-रूपभूत निरुपाधिकं रूपं प्रज्ञानघनाख्यं न प्रतिख्यायेत ।

२ 'इन्द्रः' इदि दीप्तौ । इन्दतीति इन्द्रः परमात्मा । 'मायाभिः' प्रज्ञाभिः नाम-रूपभूततत्कृतमिथ्याभिमानैर्वा । न तु परमार्थतः । 'पुरुरूपो' बहुरूपः 'ईयते' गम्यते । एकरूप एव प्रज्ञानघनः सन् अविद्या-प्रज्ञाभिः बहुरूप इव भासतेत्यर्थः ।

यस्य किल किमपि कज्जल- ।
मभवज्जगदण्डमद्भुतापिचण्डम् ॥ ४ ॥

दीप इति । कोऽप्यपूर्वः अस्पन्दः उत्क्रान्त्यादि क्रियासामान्यशून्यः । "निष्कलं निष्क्रियं" इत्यादिश्रुतेः । दीपयति स्वभासा सूर्यादीनिति दीपः परमात्मा "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः । स्नेह—दशाधारहीनं स्नेहो रागः द्वेषादेरुपलक्षणमेतत् । दशा बाल्यादिर्जीगरादिश्च, आधारः स्थूलादिभोगायतनं एतैर्हीनं यथास्यात्तथा समिन्धे प्रकाश्यधर्माऽसंस्पर्शितया इन्धे प्रकाशते । "निरवद्यं निरञ्जनम् । नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं न प्रज्ञानघनं अकायमव्रणमवाङ्मनः । अत्रायं पुरुषः स्वयंज्योतिः" इति श्रुतेः । अयं भावः । जीवाभेदे परस्य किं निष्कृष्टचित्स्वरूपे सांसारिकत्वापत्तिः उत बिम्बत्वविशिष्टे? नाद्यः । जीव-तद्धर्मावभासकस्य तस्य भास्यधर्मानाश्रयत्वात् । न द्वितीयः । उपाधेः प्रतिबिम्बपक्षपातित्वात् अविद्याप्रतिबिम्बभूतजीवगतौपाधिकधर्माणां बिम्बभूतेश्वरासंस्पर्शेन तस्य स्वातन्त्र्याविघातादिति । ननु ब्रह्मैव जगदाकारेण परिणमताम् । किमविद्यया? इत्याशङ्क्याह । यस्येत्यादि । यस्य आत्मदीपस्य आश्रयत्व-विषयत्वसाधारणी षष्ठी । किमपि अपूर्वं कज्जलं अविद्यालक्षणं आद्भुतापिचण्डं सर्वाश्चर्यगर्भं जगदण्डं 'हिरण्यगर्भः ब्रह्माण्डमभवत् किल' इति श्रौतप्रसिद्धौ । अयमभिसन्धिः ।

विसृजति यदैव भुवनम् ।
व्योमनि चिन्नाम्नि कालिका+ काचित् ॥

न तावद्ब्रह्मणः कार्त्स्न्येन परिणामः । प्रपञ्चातिरेकेण ब्रह्माभावप्रसङ्गात् । नाप्येकदेशतः । निष्कलमिति तन्निरवयवत्वश्रुतिव्याकोपात् । तस्मात्तस्य "मायान्तु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वरम्" इति श्रुतेर्मायाद्वारा विवर्तोपादानत्वमेव युक्तमिति । अत्र कोऽपीत्यनेन ब्रह्मणोऽपि तैलादिस्नेहवर्तिपात्रसापेक्षसस्पन्दप्रसिद्धदीपवैलक्षण्यं सूच्यते । किमपीत्यनेन मायाकज्जले प्रसिद्धकज्जलवैलक्षण्यमिति ॥ ४ ॥

ननु "हिरण्यगर्भः स आसीत् आदिकर्ता सर्वभूतानाम् । ब्रह्माग्रे समवर्तत" इत्यादिश्रुति-स्मृतिभ्यो हिरण्यगर्भस्य स्रष्टृत्वावगमात् किं तदतिरिक्तब्रह्मणः स्रष्टृत्वकल्पनया ? इत्याशङ्क्याह ।

विसृजतीति । चिन्नाम्नि चिदिति नाम संज्ञा यस्य तस्मिन् व्योमनि आकाशे । काचित् अपरिच्छिन्नस्यापि चिदाकाशस्यावरणसमर्था । कालिका परशक्तिरूपा माया मेघमाला च । यदैव सर्गाद्यक्षणे भुवनं चतुर्दशभुवनात्मकं विराजं जलं च विसृजति वियदादिसूक्ष्म-स्थूलभूतक्रमेण विविधं सृजति । "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी" इत्यादिश्रुतेः । वर्षति च

+ 'कालिमा कश्चित्' इति 'ख.' पुस्तके पाठान्तरम् ।

परितो बत-प्लवन्ते * ।
ब्रह्माद्यभिधानफल्गुमण्डूकाः ॥ ५ ॥
सविधेऽपि दृश्यते ननु ।
चिन्नाम्नि+व्योम्नि कालिमा कश्चित् ॥

। यत्तदोर्नित्यसम्बन्धात् तदैव ब्रह्माद्यभिधानफल्गुमण्डूकाः ब्रह्मेत्यादीन्यभिधानानि येषाम् । हिरण्यगर्भ-विराड्-देव-ऋषि-नर-तिर्यगादीनां त एव फल्गवः क्षुद्राः मण्डूकाः भेकाः परितः प्लवमानाः । इत्थं च "यो ब्रह्माणं विदधाति पूर्वम् । यो वै वेदांश्च प्रहिणोति तस्मै । हिरण्यगर्भं जनयामास पूर्वम्" इत्यादिश्रुतिभ्यो हिरण्यगर्भादीनामीश्वरसृज्यत्व-न्दतधीनज्ञानवत्त्वावगमात्, न तेषां सर्वज्ञस्पृत्वम् । उदाहृतश्रुति-स्मृत्योस्तु विराडादिमात्रस्रष्टृत्वपरत्वमिति भाव. ॥ ६ ॥

ननु उक्तमज्ञानं मानग्राह्यं न वा ? आद्ये प्रामाणिकस्य तज्ज्ञाननिवर्त्यत्वासम्भवः । द्वितीये खपुष्पवदसत्वस्य जगदुपादानत्वानुपपत्तिरित्याशङ्क्याह ।

सविधेति । सविधेऽपि प्रत्यक्त्वादतिनिकटेऽपि । उपोपसर्गः सामीप्ये । तत्प्रतीचि चित्सञ्ज्ञके नभसि कश्चित् अघटितघटना पटीयान् कालिमा अज्ञानलक्षण नैल्यं दृश्यते अहमज्ञ—इत्या-

* 'प्लवन्ते' इति 'क. ख' पुस्तकयोः ।

× 'चिन्नाम्न्याकाशे कालिमा चित्र' इति 'ग.' पुस्तके ।

सहते न विचारमसौ ।
सृजति च रूपाणि कोटिशश्चित्रम् ॥६॥

---

कारेणानुभूयते । नन्विति सर्वजनीनानुभवसिद्धत्वद्योतनार्थम् । तथा अज्ञानस्य साक्षिप्रत्यक्षसिद्धत्वान्न मानग्राह्यत्वम् । साक्षिणो भ्रमसाधारणस्य मानत्वाभावात् । नाप्यसत्त्वम् । असतः प्रत्यक्षाविषयत्वात् इति भावः । ननु च तदज्ञानं आत्मनो भिन्नमभिन्नं वा? आद्ये द्वैतापत्तिः । द्वितीये तस्य नित्यत्वापत्तेरनिर्मोक्षप्रसङ्गः । ज्ञानाज्ञानयोरैक्यानुपपत्तिश्च । भिन्नाभिन्नत्वं तु विरोधादसम्भवि । किञ्च भिन्नत्वपक्षे तस्य भावत्वे अहमज्ञ-इति नञर्थोल्लिखितधीविषयत्वानुपपत्तिः । अभावे जगदुपादानत्वानुपपत्तिः इत्याशङ्क्याह । सहत इति । असौ कालिमा विचारं भावैर्निरूपणं न सहते । भेदाऽभेदादिना कथञ्चिदपि निर्वक्तुमशक्यत्वात् । भावरूपत्वं तु नञर्थोल्लिखितधीविषयत्वेनाधर्मादिवददिष्टमेव । न ह्यहमज्ञ इत्यनुभवस्य ज्ञानसामा-

---

१ तदुक्तमाचार्यैः ।

कार्यादाश्रयतश्चैषा भवेच्छक्तिर्विलक्षणा ।
स्फोटाङ्गारौ दृश्यमानौ शक्तिस्तत्रानुमीयते ॥
पृथुबुध्नोदराकारो घटः कार्योऽत्र मृत्तिका ।
शब्दादिभिः पञ्चगुणैर्युक्ता शक्तिस्त्वतीन्द्रिया ॥
न पृथ्व्यादिर्न शब्दादिः शक्तावस्ति यथा तथा ।
अत एव ह्यचिन्त्येषा न निर्वचनमर्हति ॥

द्विवि सूक्ष्मसूत्रमादौ ।

तस्मिन्सुविशङ्कटं कटाहमथ ॥

---

न्याभावो विषयः । धर्मिप्रतियोगिज्ञानसत्वे विषयाभावेन तदसत्वे च सामग्र्या अभावेन तस्य दुर्ग्रहत्वात् । नापि ज्ञानविशेषाभावस्तद्विषयः । अत्र ज्ञानत्वस्यैव प्रतियोगितावच्छेदकत्वानुभवादिति भावः । पक्षान्तरे विचारं विहगसञ्चारम् । ननु अज्ञानस्य भावरूपत्वेऽपि सत्यस्य प्रपञ्चस्यार्थवत्तत्कार्यत्वानुपपत्तिः इत्याशङ्क्य—"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । तस्य त्रय आवसथाः त्रयः स्वप्ना" इति श्रुतेः—प्रपञ्चो मिथ्या । दृश्यत्वात् शुक्तिरजतवदित्यनुमानाच्च । प्रपञ्चस्य सत्यत्वाऽभावनिश्चयादज्ञानकार्यत्वे न किञ्चिद्बाधकं इत्याशयवानाह । सृजति चेत्यादि । कोटिशः असङ्ख्यजातीयानि रूपाणि कर्म-करणव्युत्पत्तिभ्यां नाम-रूपात्मकं जगत् । अन्यत्र नील-पीतादि । चित्रं अद्भुतं यथास्यात्तथा सृजति । चकारः पूर्ववाक्यार्थसमुच्चये । इत्थं च अनिर्वचनीयत्वे सति कार्यमात्रोपादानत्वमज्ञानलक्षणं आत्मवारणाय सत्यन्तं अविद्यासम्बन्धादिवारणायोत्तरदलम् । तत्र मृदादिवारणाय मात्रत्वं । अत्र कश्चिदित्यनेन दूरैकदृश्यविहगसञ्चारसहिष्णुरूपान्तरानारम्भकत्वमौलैस्यवैलक्षण्यं सूच्यते ॥ ६ ॥

ननु ब्रह्मणो जगद्विवर्तोपादानत्वे सर्पाद्यधिष्ठानरज्ज्वादिवद् चक्षुरादिवेद्यतापत्तिः । न च रूपाद्यभावेनाऽयोग्यत्वात्तदनाप-

तत्र समुद्र-वनाद्रीन् ।
दर्शयति महेन्द्रजालिकः को नु ? ॥७॥

---

त्तिः । तर्हीन्द्रियकत्वस्य ऐन्द्रियाध्यासाधिष्ठानत्वानुपपत्तिः—इत्याशङ्क्याह ।

दिवीति । महेन्द्रजालिकः महेन्द्रजालाख्यमायया युक्तः अर्थान् कश्चित्पुरुषविशेषः। आदौ सर्गारम्भसमये दिवि द्योतनात्मके स्वरूपे नभसि च । सूक्ष्मसूत्रं सूक्ष्मभूतोपाधिकं हिरण्यगर्भं सूक्ष्मतन्तुं च दर्शयति । अथ अनन्तरं तस्मिन् सूक्ष्मसूत्रे सुविशङ्कटं अतिविशालं कटाहं ब्रह्माण्डशरीरं विराजं प्रसिद्धकटाहं च दर्शयति । तत्र कटाहे समुद्र-वनाद्रीन् दर्शयति स को नु ! इति दर्शयितुरधिष्ठानभूतस्य रूपाद्यभावाच्चक्षुरादिप्रत्यक्षेण दुराधिगमत्वम् । अत एव च तद्व्याप्यलिङ्गादिग्रहाभावादनुमानादिना दुरधिगमत्वं सूच्यते । महेन्द्रजालिको हि प्रथममाकाशे सूक्ष्मं सूत्रं प्रसार्य तदुपरि दर्शितमहाकटाहे समुद्रादीनसम्भावितानपि दर्शयतीति प्रसिद्धम् । इदमत्राभिसंहितम् । किं ब्रह्मणः सोपाधिकस्य चक्षुरादिवेद्यत्वमापाद्यते किंवा निरुपाधिकस्य? नाद्यः । सर्पाद्यधिष्ठानरज्ज्वादेरिदन्त्वेनैव प्रपञ्चाधिष्ठानस्य ब्रह्मणः—सन् घटः—इत्याद्यनुभवे सत्त्वादिना विषयस्य इष्टत्वात् । न द्वितीयः । रूपाद्यभावेन तदयोग्यत्वात् । "न चक्षुषा पश्यति कश्चनैनम्" इति श्रुतेः । न च इन्द्रिययोग्यमेवाध्यासाधिष्ठानं-इति नियम । अयोग्यस्यापि नभसो नैल्याधिष्ठानदर्शनात् । तदुक्तं भगवता भाष्यकृता "अ-

जरठाऽपि काचिदसती ।
सन्दर्श्य गुणान् परस्य पुरुषस्य ॥
सङ्गविनैव हसितैस् ।
सर्वस्वं हरति हन्त किं ब्रूमः ! ॥ ८ ॥

प्रत्यक्षेऽपि ह्यावाशे बाला तलमलिनताद्यध्यस्यन्ति" इति। श्रुतिश्च "आराममस्य पश्यन्ति न तं पश्यति कश्चन" इति ॥ ७ ॥

एवं तत्पदार्थं स्वरुप-लक्षण परीक्षाभिः संक्षेपतो निरूप्य वक्ष्यमाणमहावाक्यार्थोपयोगितया ब्रह्मण एव मायया जीवभावप्राप्तिप्रदर्शनमुखेन त्वंपदार्थं निरूपयति ।

जरठेति। काचित् अतर्क्याऽनेकशक्तिका असती अपरमार्थभूता माया स्वैरिणीव जरठा अनादिः ।"अजामेका" इति श्रुतेः । "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इति स्मृतेश्च । अन्यत्र वृद्धा । ईदृशीमत्यपि, परस्य पुरुषस्य परमात्मनः अन्यपुरुषस्य च । गुणान् सत्वादीन् ।"लोहित शुक्ल कृष्णा" इति श्रुतेः । "सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः" इति स्मृतेश्च । अन्यत्र कृत्रिमलावण्यादिगुणान् सन्दर्श्य सम्यक् स्वतत्वप्रतिसन्धाननिरवकाशं यथा-स्यात्तथा विपर्ययतया समर्थ्य । सङ्गविनैव एकस्याऽसङ्गत्वादपर-

१ अप्रत्यक्षेऽपि' इन्द्रियाभावे ऽपीत्यर्थः । 'बाला' अविवेकिनः । 'तलमलिनतादि' तल इन्द्रनीलकटाहकल्प नभो मलिन पीत इत्येवमध्यस्य प्रत्यापतिः । तत्र इन्द्रियायोग्यत्व गम्यते व्यभिचारात् व्याप्तिः । तत्र 'आत्मानात्मनोः सादृश्याभावान्नाध्यास' इति वदतां मतमपास्तम् ।

शुचिरपि पुमान् प्रमादात् ।
शोचति मायापिशाचिकाक्रान्तः ॥
पश्यति दुःस्वप्नान् ।
भयमश्नुति यत्र पञ्चभूतेभ्यः ॥ ९ ॥

---

स्य प्रवंचनीयत्वात् सम्बन्धंविनैव हसितैः हसितवदनायाससंहितै-र्जागरादिविक्षेपैः हासैश्च सर्वस्वं पूर्णमात्मस्वरूपं समग्रधनं च हरति जीवभावेन परिच्छिद्यापलपति अपह्नुते च । हन्तेति खेदे। किं ब्रूम इत्यनेन नित्यमुक्तस्य निरतिशयानन्दैकरसस्य त्रिविधपरिच्छेद-विधुरस्य असङ्गस्य स्वप्रकाशचित्स्वरूपस्यापि परस्य ब्रह्मणो वृद्धो-दुःखबहुलः परिच्छिन्नो देहेन्द्रियमनोबुद्ध्यादिसम्बद्धो मूढोऽहमि-त्यादिजीवभावमनुभावयन्ती हन्त महामायेयं अघटितघटनापटीयसी परमाश्चर्यरूपेति व्यज्यते ॥ ८ ॥

परस्यैव मायया जीवभावमापन्नस्य संसरणप्रकारवर्णनमुखेन त्वंपदवाच्यार्थं दर्शयति शुचिरपीत्यादिना ।

शुचिः वस्तुतः अविद्या-तत्कार्यैरसंस्पृष्टः पवित्रश्च "असङ्गो ह्ययं पुरुषः। शुद्धमपापविद्धम्" इत्यादिश्रुतेः।ईदृग्विधोऽपि पुमाना-त्मा प्रसिद्धःकश्चन पुरुषश्च प्रमादात् स्वरूपाविचारात् कदाचिदा-चमनाद्यनवधानाच्च हेतोः। मायापिशाचिकाक्रान्तः मायैव पिशा-चिका पुरुषस्य स्वाभाविकस्वच्छत्वादिधर्मतिरोधानेन तदनुरूप-विविधदुश्चेष्टितहेतुत्वात्। अन्यत्र मायापिशाचिका प्रभविजृम्भि-तमिथ्यापिशाचिका तया आक्रान्तः वशीकृतःसन् शङ्कानिपादेरपि

विषयाः पुराणि कोशा ।
विभ्रमजीवातुरसदृगवरोधः ॥

म्यामिति भावः।एतदुक्तं भवति।सावयवे तन्दुलादावग्निसयोगादिना अवयवविश्लेषविशेषरूपविच्छित्त्यादिविकारसम्भवेऽपि निरवयव-कूटस्थचिदात्मनि भ्रममात्रातिरेकेण न वस्तुतः कश्चिदपि विकारगन्धः सम्भवतीति भवत्येव तस्य विवेकनिरस्यत्वं । एवं चाहङ्कार-निकृष्टः शुद्धचिदात्मा त्वम्पदलक्ष्य इत्युक्तम्।तथा च सांसारिकसुखस्य मरुमरीचिकासलिलसन्निभत्वात् ततो विरक्तेन परमानन्दस्व-रूपलाभलक्षणमोक्षायैव यतितव्यमिति भावः । अत्र यद्यपि संसारस्य परीक्षकदृष्ट्या निर्वचनीयत्वमेव तथापि श्रौतदृष्टिमवष्टभ्य खपुष्पमित्युक्तम् । तदुक्तं श्रीमद्विद्यारण्यचरणैः ।

तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ।
ज्ञेया माया त्रिभिर्बोधैः श्रौत-यौक्तिक-लौकिकैः॥ इति॥१०॥

ननु सांसारिकसुखस्यापि सामग्र्यविच्छेदसम्पत्तौ सातत्यसम्भवात् परमपुरुषार्थत्वं,कुतोऽस्य हेयत्वम्?इत्याशङ्क्याह।विषया इति।

विषयाः शब्दादयो देशाश्च पुराणि शरीराणि ज्ञानेन्द्रिय-पञ्चकं कर्मेन्द्रियपञ्चकं प्राणपञ्चकं भूतपंचकं अन्तःकरणचतुष्टयं अविद्या कामः कर्म चेत्यष्टपुराणि वा अन्यत्र नगराणि । कोशाः अन्न–प्राण-मनो–विज्ञानानन्दमयाः पञ्च, अन्यत्र धनस-श्चयाः । विभ्रमजीवातुरसदृगवरोधः विविधानां भ्रमाणां जीवातुःनिदानभूतः रसदृशः रसःसुखं "रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति श्रुतेः । तदात्मिकायाः दृशः स्वरूपचैतन्यस्य अवरोधः आवरणम् । अन्यत्र विभ्रम-जीवातुरिति छेदः । विभ्रमाणां विलासानां जीवातुरुज्जीवकः ।

सन्त्यपि तु न सन्तुष्यति ।

सम्राडात्मा यतो बतास्वस्थः ॥३१॥

असदृगनुपमः अवरोधः अन्तःपुरं प्रेयसीति यावत् । एवमादीनि भोगसाधनानि सन्ति । अपितु परन्तु सम्राडात्मा सम्यग्राजत इति सम्राट् स्वप्रकाशः आत्मा, अन्यत्र सम्राजः सार्वभौमस्य आत्मा बुद्धिः न सन्तुष्यति सन्तोषं न लभते । तत्र हेतुमाह । यतः यस्मात्कारणात् अस्वस्थः स्वरूपप्रच्युतः रुग्णश्च । बतेति खेदे । सांसारिकसुखाभासस्य बहुलायाससाधनाधीनत्व-सातिशयत्व--स्पर्धासूयातिरस्कारग्रस्तत्व--क्षणभङ्गुरत्वादिदोषदुष्टत्वात् सामग्र्यविच्छेदस्य दुःसम्पादत्वाच्च । विमर्शे¹ दुःखरूपत्वमेवेति पुरुषार्थत्वं । "यदल्पं तन्मर्त्यं, नाल्पे सुखमस्ति" इत्यादिश्रुतेः । "अनित्यमसुखं लोकमिमम्" इति स्मृतेश्च । "०दुःखमेव सर्वं विवेकिनः" इति पातञ्जलाच्च । किन्तुनिर्मृष्टनिखिलदुःखानुषङ्गनित्यनिरतिशयानंदस्य "अन्यानि भूतानि मात्रामुपजीवन्ति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् । तरति शोकमात्मवित्" इति श्रुतिभ्यः । "यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः । आत्मलाभान्न परं विद्यते" इत्यादिस्मृतेश्च । यथा नानादेश-नगर-कोश--विलासिन्यादिसकलसुखसम्पन्नस्यापि सा-

1 परिज्ञातक्लेशादिविवेकस्य परिदृश्यमानं सकलमेव भोगसाधनं सविधस्वादन्नवत् 'दुःख मेव' प्रतिकूलवेदनीयमेव भवतीत्यर्थः । यस्मादत्यन्ताभिजातोऽपि योगी दुःखलेशेनाप्युद्विजते । यथाक्षिपात्र ऊर्णातन्तुस्पर्शमात्रेणैव महतीं पीडामनुभवति नेतरदङ्गम्, तथा विवेकी स्वल्पदुःखानुषङ्गेनापि विरज्यते । एत दुक्तं भवति । ऐकान्तिकीं आत्यन्तिकीं च दुःखनिवृत्तिमिच्छतां विवेकिनः 'परिणाम-ताप-संस्कार दुःखैः गुणवृत्तिविरोधाच्च' यावत्सर्वे विषया दुःखरूपतया प्रतिभासन्ते । तस्मात्सर्वकर्मविपाको दुःखरूप एवेत्यल विस्तरेण ।

प्रकृतिविवेकविहीनः ।
प्रभुरेष पुरस्य पाटितद्वारः ॥
निद्राति यदवरोधे ।
निघ्नन्ति ततः प्रमत्तममुमरयः ॥ १२ ॥

र्मोऽस्य ज्वरादिवशादस्वस्थस्य सर्वं न सुखाय भवत्यपि तु दुःखायेति । स्वास्थ्यमेव तस्य सुखहेतुस्तयेति भावः ॥ ११ ॥

वैषयिकसुखस्य न केवलं दुःखरूपत्वं किन्तु अज्ञस्य प्रमादिनो विवेकवैधुर्यादिन्द्रियाण्यनिगृह्णतः कामक्रोधादिप्रयुक्तत्वात्सत्प्रयोजकत्वाच्च दुरन्तनानादुःखचक्रबीजत्वमपि भवतीत्यभिसन्धायाह । प्रकृतीति ।

एषः विधिप्रातिकूल्यविवशः पुरस्य देहस्य नगरस्य च प्रभुः अधिष्ठाता जीवो राजा च। यद्यस्मात्कारणात् प्रकृतिविवेकविहीनः प्रकृतेर्मायातत्कार्यतः असम्भेदज्ञानं। प्रकृतीनां प्रजानां विवेको मर्यादापालनं च तद्रहितः सन् । पाटितद्वारः असंवृतचक्षुरादिकरणद्वारः । उद्घाटितपुरद्वारश्च सन् अवरोधे अज्ञानावरणे अन्तःपुरे च निद्राति नितरां कुत्सितदशां प्राप्नोति आत्मानं न प्रबुद्ध्यते वा अन्यत्र स्वपिति । ततस्तस्मात्कारणात् प्रमत्तं विचारविधुरं अनवहितं च अमुं पुरस्वामिनं अरयः कामक्रोधलोभमोहमदमात्सर्यादयः षडरयः प्रसिद्धशत्रवश्च । मुहुर्मुहुः निरयस्थावरादिनानादुःखावस्थाप्रापणेन दुःखाकुर्वन्ति हिंसन्ति च ॥ १२ ॥

लोके हि राजा प्रजाविमर्शहीनः प्रोद्घाटितपुरद्वारः स्वयमसावधानोन्तःपुरे निद्राणःसन् शत्रुं कथमिव सम्पन्न इत्याश्चर्यविषादावभिनयन्नाह । आकस्मिकीति ।

आकस्मिकी स्वदेशात् ।
अपसृतिरतिसौख्यहानिरविभुत्वम् ॥
श्रुतिनयनमान्द्यमरिभिर् ।
वद्धश्च महात्मनो दशेयमहो ॥ १३ ॥

---

महात्मनः महतः अपरिच्छिन्नस्यात्मनः महानुभावस्य राज्ञश्च । आकस्मिकी । अनर्कितहेतुका स्वदेशात् स्वस्वरूपात् स्वीयराष्ट्राच्च अपसृतिः प्रच्युतिः अतिसौख्यहानिः निरतिशयानन्दतिरोभावः साम्राज्यसुखापगमश्च । अविभुत्वं परिच्छिन्नता प्रभुत्वहानिश्च । श्रुतिपूर्वनिपत्सु नयनेषु करव्युत्पत्त्या युक्तिषु च मान्द्यं अपाटवं श्रोत्र-नेत्रापाटवं चा। अरिभि कामादिभिः शत्रुभिश्च वन्धः संसारमहनं च। चकारोऽनुक्तदुर्दशान्तराणां समुच्चयार्थः। इयमुक्तरूपा अनुभूयमाना असम्भाविता अनुचिता च दशा दुरवस्थापि । सम्पन्नेति शेषः । अहो इत्याश्चर्य-विषादयोः । एवं संसारदुर्दशाया अनर्हत्वोक्त्या च हेयत्वस्यासम्भावितत्वोक्त्या च भ्रमविजृम्भितत्वस्य सूचनेन ततो विरज्य तन्निवृत्त्युपायतत्त्वज्ञानसाधनश्रवणादावश्यं यतितव्यमिति दर्शितम् । पक्षान्तरेऽपि शौर्यौदार्यादिसकलगुणशालिनः सार्वभौमस्याकस्मिककुलपरम्परा राज्यभ्रंशविविधभोगवियोग. प्रभुत्वहानिराधिव्याध्याद्याकुलतां शत्रुकृतवन्धश्रेण्यादिदुर्दशा पश्यन्तः तदीयवैभवं च पश्यन्तः साधवः साश्चर्यं खिद्यन्तीति प्रसिद्धम् ॥ १३ ॥

संसारस्योक्तं दुर्दशात्वं वैराग्यदार्ढ्याय प्रपञ्चयति । तमसीति ।

तमसि निलीय हरन्तम्।
बुद्धिवशेन निरवधि परस्वम्॥
पथि पथि गुणेन बध्वा।
भ्रमयति पुरुषं करालकालभटः॥१४॥

---

तमसि अज्ञाने अन्धकारे च निलीय तिरोभूय दुर्बुद्धिवशेन दुःष्टान्तःकरणतादात्म्यापत्तिरूपतत्पारतन्त्र्येण पापबुद्ध्यधीनतया च निरवधि परस्वं अपरिच्छिन्नसर्वोत्कृष्टस्वस्वरूप अपरिमितपरधनं च हरन्तं परिच्छिन्दन्तं अपहरन्तं च। पुरुषं आत्मानं तस्करं च। गुणेन सत्वादिना रज्वा च। बध्वा उपासनैरग्निहोत्रादिविहितकर्मभिः कलञ्जभक्षणादिनिषिद्धकर्मभिश्च वशीकृत्य। अन्यत्र स्पष्टम्। करालकालभटः उग्रः कालरूपो भटः कालवर्णः पादातिश्च। पथिपथि उत्तर-दक्षिणनिरयमार्गेषु प्रतिमार्गं च भ्रमयति परिभ्रमणं कारयति। तत्र सात्विकपुरुषं विद्यया देवलोकं, राजसं नित्यादिकर्मणा पितृलोकं, तामसं निषिद्धकर्मणा अधोलोकं गमयतीति विवेकः। तथा च श्रुतिः। "कर्मणा पितृलोको विद्यया देवलोक। अथैतयोःपथोर्न कतरेण च न तानीमानि भद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयमिति"पक्षान्तरेऽपि परस्वापहारिणं चोरं रज्वा बध्वा राजभटाः प्रतिरथ्यं परिभ्रमयन्तीति प्रसिद्धम्॥१४॥

एवमाविद्यकं संसारं प्रपञ्च्येदानीं तन्निवृत्युपाय तत्वमस्यादिमहावाक्यार्थज्ञानमेव न कर्म इति व्यतिरेकमुखेन दर्शयन्नाह। सकृदिति।

सकृदपि यदाप्तवचनम् ।
सत्सुखसन्धायि न च कृतं पुंसा ॥
तदसौ गृहेषु बलिभिः ।
किङ्करवत् कर्मकारितां नीतः ॥ १५ ॥

---

यत् यस्मात्कारणात् पुंसा अधिकृतेन पुरुषेण प्रसिद्धेन च सत्सुखसन्धायि "सदेव सौम्येदमग्र आसीत्" इत्युपक्रान्तं ब्रह्मसुखं प्रतीचा सहाभेदेन सन्धातुं शीलमस्येति तथोक्तम् । अन्यत्र निर्दोषं प्रसिद्धसुखावहम् । आप्तवचनं आप्तं निर्दोषं तत्वमस्यादिमहावाक्यरूपं आगमः । यद्वा आप्तस्य परमानन्दरूपतया परमप्रियतमस्यात्मनः प्रतिपादकं वचनम् । तथाच श्रुतिः । "तदेतत्प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात्सर्वस्मादान्तरं यदयमात्मा" इति । यद्वा आप्तं नित्यप्राप्तं ब्रह्म तस्य विस्मृतकण्ठचामीकरकल्पस्याऽविद्यातिरोधाननिरसनेन प्रापकं तदेव वचनम् । "ब्रह्मैव सन्ब्रह्माप्येति" इतिश्रुतेः । अन्यत्र हिताशंसिनो वचनं सकृदपि एकदापि । अत्र सकृदित्यनेन मुख्यस्याधिकारिणः सकृन्महावाक्यश्रवणेनापि तत्वसाक्षात्कारो भवतीति दर्शितम् । अपिशब्देन च मन्द-मध्यमयोः श्रवणाद्यावश्यकतेति दर्शितम् । यथाह भगवान् भाष्यकारः । "भवेदावृत्यानर्थक्यं तं प्रति यस्तत्वमसीति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नुयात् । यस्तु न शक्नोति तं प्रत्युपयुज्यत एवावृत्तिः" न श्रुतं आचार्याधीनतया न विचारितम् । अनेन श्रोतव्य इति श्रुतिविहितविचारावश्यकत्वं सूचितम् । अन्यत्र उपादेयबुद्ध्याऽनाकर्णितम् । तस्मात् कारणात् असौ उक्तः पुमान् गृहेषु उत्ति-

सह दयितयेह विषयान् ।
चरति जनो हन्त जातरूपधरः ॥

न्यायेन लक्षणया त्रिष्वाश्रमेषु परगृहेषु च । बलिभिः पूजाभिः इन्द्रादिदेवताप्रीणनैरुद्देश्यभूतैरिति यावत् । एतेन—अचेतना देवतेतिजैमिनिमतनिरासिदेवताधिकरणन्यायः सूचितः । अन्यत्र प्रबलैः पुरुषैः । किङ्करवत् कर्मकारितां अग्निहोत्राद्यनुष्ठानपरतां जलाहरणादिसेवाकारित्वं च नीतः प्रापितः । इत्थं च मुमुक्षोः सन्यासपूर्वकश्रवणादिसाध्यज्ञान एवाधिकारो न कर्मणि । तस्य मोक्षविपरीतफलत्वादिति दर्शितम् । स्वतोहिताहितमजानतः सुखावहं सुहृद्वचनम् । सुहृद्वचनमप्यशृण्वतो बलात् पुरुषपारतन्त्र्येण दास्यमेव पर्यवस्यतीति लोकवृत्तं स्फुटम् ॥ १५ ॥

स्यादेतत् मुमुक्षोः श्रवणावधिकार इत्येतन्न दूरीकुर्मः । तस्य सन्यासपूर्वकत्वं तु दूरीकुर्मः "यावज्जीवमग्निहोत्रं जुहोति । यावज्जीवं दर्श-पूर्णमासाभ्यां यजेत । कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इत्यादिश्रुतिभ्यः कर्मणां यावज्जीवमनुष्ठेयत्वावगमात् । सन्यासविधायकश्रुतीनां चान्धपङ्ग्वादिकर्मानधिकृतपुरुषायत्तत्वोपपत्तेः[1] ।

---

[1] एतदेवोक्तं मतान्तरोपन्यासे भट्टैः ।

'अतीन शक्यते वक्तुं येऽन्ध-पङ्ग्वादयो नराः ।
गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः ॥
नैष्ठिकब्रह्मचर्यं वा परिव्राजकताऽपि वा ।
तैरवश्यं गृहीतव्या तेनादावेतदुच्यते' ॥

इत्यादि । 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इत्यादिश्रुतिभिः प्रतिपाद्यमानस्त्यागः प्रवृत्तिमार्गानधिकृतविषय इति तेषामाशय इति दिक् ।

सह दयितया तु विषयान् ।
चरति न मोक्षाय जातरूपधरः ॥१६॥

---

जायावित्तादिसाध्यकर्तव्यसमुचितादेव ज्ञानान्मोक्ष । तदुक्तम् ।

उभाभ्यामेव पक्षाभ्यां यथा खेचरतां गतिः ।
तथैव ज्ञान कर्मभ्यां लभ्यते परम पदम् । इतीत्येकदेशिमत निराकुर्वन्नाह । सहेति ।

इह संसारभूमौ जन जननमरणादिधर्मा जीव । सहदयितया धर्म भोगयोरानुकूल्याच्छ्रेयस्या सहजरूपधर कर्मसाधनवित्तसम्पन्न भोगोचितस्वर्णालङ्कारशाली च सन्। विषयान् विषण्वन्ति निबध्नन्ति फलासङ्गेन स्वानुष्ठातॄनिति विषया नित्य नैमित्तिक काम्यकर्माणि "कर्मणा पितृलोक "इति श्रुया निय नैमित्तिकयोरपि पितृलोकप्राप्त्यादिबन्धहेतुत्वावगमात् । अन्यत्र स्रक् चन्दनादि विषयान् चरति आचरति अनुभवति च । हन्तेति खेदे । अत्र कर्मठ विषयलम्पटयो समानपदै प्रतिपादनेन अभेदाध्यवसानात् कर्मफल भोगफलनरकाद्यभेदाध्यवसानपर्यवसानात् अतिकुत्सित त्व ध्वनितम् । "न कर्मणा न प्रजया धनेन । प्लवा ह्येते अदृढा यज्ञरूपा । अष्टादशो क्तमवर येषु कर्म। तद्यथेह कर्मचितो लोक क्षीयते एवमेवामुत्र पुण्यचितो लोक क्षीयते"इत्यादिश्रुते । "ते त भुक्त्वा स्वर्गलोक विशाल क्षीणे पुण्ये मर्त्यलोक विशन्ति"इति स्मृतेश्च । कर्मणा मोक्षविपरीतफलत्वावगमात् न मोक्षहेतुत्वम् । न च केवलकर्मणोऽतथात्वेऽपि ज्ञानसमुचितस्य तस्य तथात्व किं नस्यात्? इत्या शङ्क्य "दूरमेते विपुची अविद्या या च विद्येति ज्ञात" इत्यादिश्रुत्या विद्याऽविद्यात्मकज्ञान कर्मणोर्यौगपद्याऽस

म्भवावगमेन जाति-वयोऽवस्थाद्यभिमानि-तदनभिमानिलक्षणाविलक्षणाधिकारित्वादिना च समुच्चयासम्भवात् ।"उभाभ्यां" इत्यादिस्मृतिस्तु 'जैमिनिरथ वा' इतिश्लोके वक्ष्यमाणन्यायेन कर्मसमुच्चयपरत्वेनाप्युपपन्नेतिभावः ।

एवं ज्ञान-कर्मसमुच्चयं निराकृत्य सन्यास एव ज्ञानद्वारा मोक्षहेतुरिति दर्शयति । सेहेति । सुशब्द उक्ताद्विशेषं सूचयति। सहदयितया दयया सहवर्तमानाः सहृदयाः "मैत्री-करुणा-मुदितोपेक्षाणां सुखदुःख-पुण्यापुण्यविषयाणां भावनातः श्चित्तप्रसादनम्"इति पातञ्जलसूत्रोक्ता मैत्र्यादिगुणाः सन्ति येषामिति सहदयिनः तेषां भावः सहदयिता । सहचरी अनपायिनी दयिता च तया । एकत्र इत्थंभूतलक्षणे, अपरत्र सहार्थे गम्यमाने तृतीया । जातरूपधरः जातमात्रस्य यद्रूपं तस्य धरः । नग्नः परमहंस इति यावत् । स्वर्णालङ्कृतश्च सन् । मोक्षाय तादर्थ्ये चतु-

---

१ अस्यायमर्थः । 'मैत्री' सौहार्दं, 'करुणा' कृपा, 'मुदिता' हर्षः, 'उपेक्षा' औदासिन्य, एता यथाक्रमं सुखितेषु दुःखितेषु पुण्यवत्सु च भावयेत् । तथा हि। सुखितेषु साध्वेषां सुखित्वमिति मैत्रीं कुर्यान्न त्वीर्ष्याम् । दुःखितेषु कथं नु नामैषां दुःखित्वनिवृत्तिः स्यादिति कृपामेव कुर्यान्न ताटस्थ्यम् । पुण्यवत्सु पुण्यानुमोदनेन हर्षं कुर्यात् न तु किमेते पुण्यवन्त इति विद्वेषम् । सूत्रे सुखदुःखादिशब्दैस्तद्वन्तः प्रतिपादिताः । तदेवं मैत्र्यादिपरिकर्मणा चित्तं प्रसीदति सुखेन समाधेराविर्भावो भवति । परिकर्म च एतद्बाह्यं कर्म । तथा-मिश्रकादिव्यवहारगणितनिष्पत्तये सङ्कलितादिकर्म उपकारकत्वेन प्रधानकर्मनिष्पत्तये प्रभवति, एवं द्वेषरागादिप्रतिपक्षभूतमैत्र्यादिभावनया समुत्पादितप्रसादं चित्तं सम्प्रज्ञातसमाधियोग्यं सम्पद्यते इति भावः ।

जैमिनिरथ वा व्यतनुत ।
शुकतातशुभोक्तिचन्द्रशालायाः ॥

जान क्षय्यलोका भवन्ति" त्यादिश्रुतिविरोधात् । अत एव "अपाम सोमं" इत्यादेरर्थवादस्यापेक्षितत्वादनित्यस्वपरतयोपपत्तिः । अत एव न तस्य मोक्षः । सर्वैरादिभिर्नित्यत्वाभ्युपगमात् आत्मरूपत्वे तु तस्य नोक्तदोषः । तस्य च नित्यप्राप्तत्वेऽपि अज्ञानमात्रतिरोधानात् । अप्राप्तकल्पस्य ज्ञानादेव प्राप्तिरिति न तत्र कर्मोपयोगगन्धोऽपि । यत्तु वेदान्तानामविवक्षितार्थत्वमुक्तं तत् किं बाधितार्थत्वाद्वा विफलार्थकत्वाद्वा? नाद्यः । उपनिषदेकगम्यस्य प्रत्यगात्मतत्त्वस्य पराङ्विषयप्रत्यक्षादिभिर्बाधायोगात् । न द्वितीयः स्वप्रकाश्यपरमानन्दैकरसस्यात्मतत्त्वस्य परमप्रयोजनतया श्रुति-विद्वदनुभवसिद्धत्वेन तदुपहतत्वात् । कर्तृस्तावकत्वं त्वकर्त्रात्मबाधितत्वात् अतिलङ्घितकर्मप्रकरणत्वाद्विभिन्नफलत्वाच्चापास्तमेव ॥ १७ ॥

एवं कर्मणां साक्षान्मोक्षेऽनुपयोगमुक्त्वा "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति । यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः संयोग-पृथक्त्वन्यायेन काम्यसाधारण्येन नित्य-नैमित्तिकानामेव वा कर्मणां चित्तशुद्धिद्वारा ज्ञानोपयोगमाह । जैमिनिरिति ।

अथ वेति सर्वथानुपयोगपक्षाद्व्यावृत्तिः । जैमिनिः शुकतातशुभोक्तिचन्द्रशालायाः । शुकतातः श्रीबादरायण तस्य शुभा ·

निःश्रेणिमारुरुक्षोर् ।
निपुणं तत् कर्म मनसि बहुकुर्मः॥१८॥

परमपुरुषार्थप्रयोजकत्वात् अत्यन्तमङ्गलभूता, उक्तिः शारीरकसूत्रसन्दर्भलक्षणा वाणी, सैव चन्द्रशाला शिरोगृहं तस्या निःश्रेणिः प्राप्तिसाधनं अग्निहोत्रादिलक्षणं धर्ममिति यावत् । आरुरुक्षोः अर्थाच्चन्द्रशालामेवारोढुमिच्छोरर्थे व्यतनुत विस्पष्टमतनुत । न्यायैरुपपादितवानिति यावत् । अतो निपुणं सर्वमतिपक्षमतिक्षेपपूर्वकवेदप्रामाण्यप्रतिष्ठापनादिकुशलं तत् कर्म तस्य जैमिनेः कर्मशास्त्रप्रणयनरूपां क्रियां मनसि बहुकुर्मःबहुमन्यामहे । नित्यादिकर्मानुष्ठानस्यैव चित्तशुद्धिद्वारा श्रवणाद्यधिकारकारणत्वात् । "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते" इति स्मरणात् तदनुष्ठानस्य च जैमिनीयविचाराधीनत्वादिति भावः । अथवा तत् जैमिन्युपपादितं निपुणं उक्तब्रह्ममीमांसाधिकारप्रापणक्षमं कर्म अग्निहोत्रादिलक्षणं धर्मं मनसि बहुकुर्मः बहुमन्यामहे । नत्ववमन्यामहे । अत्र 'शुकतात०'इत्यनेन ब्रह्मविदामेकपुण्डरीकस्य श्रीशुकस्यापि ज्ञानदायप्रदः पितेति तदीयवाङ्मात्रस्यातिविश्वसनीयतेति सूचितम् । तत्रापि 'शुभोक्ति०'इत्यनेन तत्प्रणीतनिखिलस्मृतीतिहास-पुराणापेक्षया साक्षान्मोक्षसाधननिर्णायकशारीरकसूत्रस्याभ्यर्हितत्वं सूचितम् । 'चन्द्रशालाया'इत्यत्र-रूढ्यर्थे कर्मवारयलब्धयौगिकार्थाऽभेदाध्यवसानात् शिरोगृहस्य चन्द्रपदवाच्यहिमकर-कर्पूरतादात्म्यशालिशालत्वप्रतीत्या

वेदान्तमानराजे ।
विश्रान्ते सुमतिचित्तशुद्धान्ते ॥
फणि-कपिलसरस्वत्योर् ।
बहुधा दौवारिकीपदं सुलभम् ॥१९॥

---

प्राप्तिमात्रेण सकलसन्तापप्रशमनपूर्वकनिरतिशयानन्दहेतुत्वं ध्वनितम् ॥ १८ ॥

ननु योग साङ्ख्यशास्त्रयोरपि निपुणतरमात्मतत्त्वनिरूपणेन मोक्षसाधनत्वात् कथं शारीरकशास्त्रस्यैवाभ्यर्हिततमत्वं ? तत्राह । वेदान्तेति ।

वेदान्तमानराजे वेदान्त एव मानानां प्रत्यक्षानुमानोपमानागमार्थानुपलब्ध्याख्यानां वैदिकसम्मतप्रमाणानां राजा तत्त्वावेदकत्वलक्षणस्वातन्त्र्यात् प्रत्याख्य स्वार्थाऽविरोधिव्यावहारिकविषयसमर्पणेन तत्पोषकत्वरूपोपकर्षाश्रयत्वात् । तस्मिन् सुमतिचित्तशुद्धान्ते शोभना अबाधितार्थपरिशीलनक्षमा मतिः प्रज्ञा यस्मिन् तादृशं चित्तं तदेव शुद्धान्तः सुमतिलक्षणनायिकाश्रयत्वात् । अन्तःपुरं तत्र विश्रान्ते निर्विशङ्कं प्रतिष्ठिते सति । फणि कपिलसरस्वत्योः फणिनः पतञ्जलेः कपिलस्य च सरस्वत्यौ वाण्यौ योग–साङ्ख्यशास्त्ररूपे तयोर्बहुधेति योग्यस्थानसम्भावनायाम् । दौवारिकीपदं द्वारपालिकास्थानं सुलभं सुखलभ्यं योग्यमितियावत् । एकस्या रागादिदोषप्रवेशनिरोधियोगवेत्रप्रसारिकात्वात्, अन्यस्या देहादितादात्म्य-

सूत्रं सात्यवतेयश्चक्रे ।
बलमस्य शङ्करो भगवान् ॥

प्रसरविरोधिविवेकयष्टिधारिणीत्वात् । आत्मनश्चित्स्वरूपत्व-निर्लेपत्व-निर्विकारत्वादिभिर्वेदनांशेन वेदान्तरासान्तरङ्गत्वाच्च । उक्तं हि "जीवभेदो जगत्सत्यमिति वेदान्तसम्मतिः" इति । अत एव जीवभेदाद्यतात्त्विकार्थस्यापि प्रतिपादकतया निपुणतरत्वाभावान्न तयोः प्राधान्येन मोक्षसाधनत्वमिति भावः ॥ १९ ॥

ननु--शारीरकसूत्रसन्दर्भस्य बहुभिर्नास्तिकादिभिर्बहुधा व्याख्यातत्वात् तेषु कतमदर्शितपथेन निःश्रेयसाधिगमः-इति सन्दिहानं प्रत्याह । सूत्रमिति ।

सत्यवत्या अपत्यं सात्यवतेयः श्रीबादरायणः सूत्रं बह्वर्थ सूचकं "अथातो ब्रह्मजिज्ञासा" इत्यादि-"अनावृत्तिः शब्दात्" इत्यन्तब्रह्मसूत्रसन्दर्भं तन्तुं च चक्रे चकार । अस्य सूत्रसन्दर्भस्य बलं तत्त्वप्रतिपत्तिप्रतिकूलव्याख्यानान्तरप्रत्याख्यानपूर्वकतात्त्विकार्थाविष्करणेन दृढीकरणरूपं भाष्यम् । अन्यत्र परिवर्तनादिना दृढीकरणम् । भगवान् ।

१ सूत्रलक्षणमुक्तं स्कान्दे आनन्दतीर्थकृतब्रह्मसूत्रभाष्ये.—

स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥ इति ।

२ भाष्यलक्षणमप्युक्तं सर्वज्ञात्ममुनिभिः.—

सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥ इति ।

तत्र निबन्धनमपरे।
चित्रं भवजालजीवखगमुक्तिः ॥ २०॥

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणम् ॥

इत्युक्तषड्गुणैश्वर्यसम्पन्नः। शङ्करः शं जरा मरणादिनिखिलदुःखनिर्मुक्तं मुक्तिसुखं नानाभाष्यामृतप्रवाहप्रणयनेन करोति शङ्करावतारस्तन्नाम्नैव विख्यातः श्रीभाष्यकारः। चक्र इत्यनुषज्यते। तत्र भाष्ये दृढीकृततन्तौ च। अपरे पद्मपादाचार्य-वाचस्पतिमिश्रादयः निबन्धनं व्याख्यानरूपं प्रबन्धं ग्रन्थिं च। अत्रापि चक्रुरिति वचनविपरिणामेनानुषज्यते। भवजालजीवखगमुक्तिः भवः संसारस्तल्लक्षणे जाले ये जीवरूपाः खगाः पक्षिणः तेषां मुक्तिर्मोक्षः। भवतीति शेषः। चित्रमाश्चर्यम्। अत्र हि तन्तुनिर्माण-दृढीकरण-तद्ग्रन्थिबन्धन रूपजालसामग्र्या जालान्निर्मुक्तिरिति चित्रता। अयमाशयः। न हि तावद्व्याख्यान्तरप्रसिद्धं ब्रह्मणः सगुणत्वं सम्भवति। "केवं-

१ ब्रह्मणः सगुणत्वमुक्तं रामानुजैः—

तस्य जगतः कर्ता उपादानं च परमेश्वरपदार्थः वासुदेवादिपदवेदनीयः। तदुक्तं महोपनिषदि—

"वासुदेवः परं ब्रह्म कल्याणगुणसंयुतः।
भुवनानामुपादानं कर्ता जीवनियामकः" ॥

इति। अन्यत्रापि—

षड्रूपगो वासुदेवः प्रद्युम्नश्चानिरुद्धकः।
व्यूहश्चनात्त्रिधो ज्ञेयः सूक्ष्मं सम्पूर्णषड्गुणम् ॥
तदेव वासुदेवाख्यं परं ब्रह्म निगद्यते।

इत्यादि विस्तरभयादत्र नोक्तम्।

वलो निर्गुण श्च" इतिश्रुतिविरोधात् । गुण-गुणिनोरत्यन्तं भिन्नत्वेनाभिन्नत्वेन च दुर्निरूपत्वात् । अत एव न तस्य जगदाकारपरिणामित्वम् । कृत्स्नैकदेशविकल्पासहत्वेन प्राग् दूषितत्वाच्च । नापि जीवानां तत्वतः संसारित्वम् । "न जायते म्रियते च" इत्यादिश्रुतिविरोधात् । भावाभावयोरेकत्र विरोधेनासम्भवाच्च । नापि जीवानां परस्परं भेदः ।

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

इतिश्रुतिविरोधात् । आकाशवदौपाधिकभेदेनापि विरुद्धधर्मव्यवस्थोपपत्तेश्च । नापि जगत्सत्यत्वम् । "नेह नानास्ति किञ्चन" इति श्रुतिविरोधात् । दृश्यस्य शुक्तिरूप्यवन्मिथ्यात्वाच्च । नापि जीव--ब्रह्मणोरात्यन्तिको भेदः । "तत्त्वमसि" इत्यादिश्रुतिविरोधात्[1] । ब्रह्मणः प्रत्यगभिन्नत्वे घट-

[1] माध्वास्तु अस्य विरोधस्य अन्यथैव परिहार कुर्वन्ति । तद्यथा--
न च तत्त्वमस्यादितादात्म्यव्याकोपः । श्रुतितात्पर्यापरिज्ञानविजृम्भणात् ।

"आह नित्यपरोक्षं तु तच्छब्दो ह्यविशेषतः ।
त्वं शब्दश्चापरोक्षार्थं तयोरैक्यं कथं भवेत् ॥
'आदित्यो यूप' इतिवत्सादृश्यार्था तु सा श्रुतिः ॥
जीवस्य परमैक्यं च बुद्धिसारूप्यमेव वा ।
एकस्थाननिवेशो वा व्यक्तिस्थानमपेक्ष्य वा ॥
न स्वरूपैकता तस्य मुक्तस्यापि विरूपत" ।

अथवा 'ततत्वमसि' इत्यत्र स एवात्मा स्वातन्त्र्यादिगुणैरुपेतत्वात्, अतत्त्वमसि त्वं तद्भिन्नोऽसि तद्रहितत्वात् इति एकत्वमति शयेन निराकर्तव्यम् । तदुक्तम्--
"अतत्वमिति वा छेदः ते नैक्यं सुनिराकृतम्" ।
इति । तस्मात् "स यथा शकुनिः सूत्रेण बद्धः" इत्यादिषु भेद एव दृष्टान्ताभिधानाय अभेदोपदेश इति तत्वशब्दरहस्यमित्यलमप्रसक्तेन ।

यज्जडत्वाद्यापत्तेश्च । नापि जीवाणुत्वम् । "महानयमात्मा" इतिश्रुतिविरोधात् । सर्वाङ्गीणशैत्याद्यनुपलम्भाच्च । नापि ब्रह्मणोऽर्चिरादिगतिः "न तस्य प्राणा उत्क्रामन्ति । अत्रैव समवलीयन्त" इतिश्रुतिविरोधात् । श्रुतिसिद्ध विभुत्वस्य गगनवद्गत्यनुपपत्तेश्च । नापि लोकविशेषस्य नित्यत्वम् । "अतोऽन्यदार्तम्" इत्यात्मेतरस्यानित्यत्वश्रुतिविरोधात् । परिच्छिन्नस्य घटवदनित्यत्वाच्च । अत एव न तत्प्राप्तेर्मोक्षत्वम् । "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति मोक्षे क्रियाकारकफलनिराकरणश्रुतिविरोधात् । शरीरस्यादृष्टकार्यत्वनियमात् । अदृष्टरहितस्य तदसम्भवात् ।

---

१ विशिष्टाद्वैतवादिनो रामानुजा द्वैतवादिनो माध्वाश्च जीवस्याणुत्वे इमाः श्रुतीः प्रमाणयन्ति ।

वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ इति ।
आराग्रमात्रः पुरुषोऽणुरात्मा चेतसा वेदितव्यः । इति च ।

२ यत्तु जीवाणुत्ववादिनो वाल्लभाद्या अस्याः श्रुतेः परब्रह्मपरत्वमाहुस्तन्न। 'प्राणेषु हृद्यन्तर्ज्योतिः' इत्यभिधानात् प्राणादीनां परे ब्रह्मणि सम्बन्धाभावापत्तेरिति दिक् ।

३ लोकविशेषस्य नित्यत्वमाहुर्द्वैतवादिनः । उपासनाक्रमसमुचितेन विज्ञानेन दृष्टे दर्शने नष्टे भगवद्भक्तस्य तन्निष्ठस्य भक्तवत्सलः परमकारुणिकः पुरुषोत्तमः स्वयाथात्म्यानुगुणनिरवधिकानन्दरूपं पुनरावृत्तिरहितं स्वपदं प्रयच्छति । तथा च स्मृतिः —

स्वभक्तं वासुदेवोऽपि सम्प्राप्यानन्दमक्षयम् ।
पुनरावृत्तिरहितं स्वीयं धाम प्रयच्छति ॥

इति विष्णुलोकस्य नित्यत्वमाहुः । माध्वा अप्येवमत्र । वाल्लभीयास्तु गोलोकस्य नित्यत्वमाहुः ।

बहुविकटसाध्य-साधन- ।
पक्ष-विपक्षादिरहह संसारः ॥

जीवादृष्टप्रयुक्तत्वेऽपि अन्यत्वेनानित्यत्वद्धौव्याच्च । नापि ब्रह्मणः केवलजगन्निमित्तत्वम् । "तदात्मानं स्वयमकुरुत "इतिश्रुति-विरोधात् । सार्वात्म्यानुपपत्तेः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा-विरोधाच्च । अतः परिशेषाद्भगवत्पादीयमेव दर्शनं श्रेयस्कर-मिति संक्षेपः ॥ १० ॥

ननु-कथं भगवत्पादीयमपि दर्शनं श्रेयस्करम्? दृढतरन्याय-सन्दृब्धकणभक्षाक्षचरणादिदर्शनविरुद्धत्वात् । शब्दशक्तितात्प-र्यग्रहस्यानुमानाधीनत्वेन श्रुतीनामपि न्यायोपजीवितया तद-नुरोधेन नेतव्यत्वात्--इत्याशङ्कां परिहरन् समनन्तरश्लोकस-न्दर्भकृतत्वंपदार्थपरिशोधनफलसंसारनिदानसविलासाज्ञाननिरत्य-र्थं अवश्यज्ञातव्यतया प्रतिज्ञातं प्रत्यगात्मैक्यलक्षणं तत्त्वम-स्यादिमहावाक्यार्थं दर्शयति । बह्विति ।

बहुविकटसाध्य साधन-पक्ष-विपक्षादिः साध्यादिः ऐहिकगृ-ह-क्षेत्रादीनि आमुष्मिकस्वर्गादीनि च, साधनानि राजसे-वादीनि यागादीनि च, पक्षाः पुत्र-मित्रादयः, विपक्षाः शत्रवः, आद-यो येषां रोगादीनां ते; बहवः विकटाः दुःखदा यस्मिन् स इति बहुव्रीहिगर्भस्त्रीपदबहुव्रीहिः । कणादपक्षे तु- साध्यं व्यापकं साधनं व्याप्यं पक्षः सिसाधयिषाविरहविशिष्टसिद्ध्यभाववा-न्, विपक्षो निश्चितसाध्याभाववान् आदय उपाधि-हेत्वाभा-

क्रूरः कणादनयवत् ।
किंतु तमेकश्छिनत्ति तत्त्वमसिः ॥२१॥

सादयो येषां ते; बहवो विकटा दुरवगाहा निर्वचना यस्मिन्स इति विग्रहः पूर्ववत् । संसारः जनन-मरणादिप्रवाहः कणादनयवत् । कणादनयः वैशेषिकशास्त्रम् । गौतमनयस्याप्युपलक्षणमेतत् । तद्वत् अग्रिमच्छेद्यत्वेऽप्येतत्साहित्यं बोद्धव्यम् । क्रूरः दुःसहः । पक्षान्तरे वेदविरुद्धार्थप्रतिपादनेनाधोगतिहेतुत्वादतिनिष्ठुरः । यथाहुः ।

धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधाः ।
बुद्धिमान्वीक्षिकीं प्राप्य निरयं प्रपन्ति ते ॥
हैतुकान्बकवृत्तींश्च दूरतः परिवर्जयेत् ।
अधीत्य गौतमीं विद्यां शृगालीं योनिमाप्नुयात् ॥

तर्ह्यतिप्रबलस्य तस्य दुष्परिहरत्वान्नकस्यापि मोक्षप्रत्याशेत्याशङ्क्याह । किं विद्यादिना? तं संसारं एकः सहायानिरपेक्षः तत्त्वमसिः महावाक्यानुकरणमेतत् । अनुकार्येणार्थवत्तया प्रातिपदिकत्वात् सुप् । यद्वा तत्त्वविदोपलक्षितमहावाक्यलक्षणोऽसिः खड्गः छिनत्ति समूलमुच्छिनत्ति । अयं भावः । उपक्रमादिषड्विधलिङ्गैः[1] श्रुतीनामैकात्म्यतात्पर्या-

[1] उपक्रमादिषड्विधलिङ्गानि चेत्थम्—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इति । एकप्रकारा असकृदुक्तिरभ्यासः । प्राचुर्येण प्रमाणान्तरेणाऽसिद्धता अपूर्वता । फलवत्त्वं फलम् । स्तुति-निन्दा परकृति-पुराकल्पादिरूपोऽर्थवादः । युक्तिरुपपत्तिः । उपक्रमादीनामुपपत्तित्वेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथगुक्तिः ।

कथमहह कुतर्काशनि- ।
कर्कशरवमुर्छितेषु शोच्येषु ॥

वधारणात् । तात्पर्यवतीनां च श्रुतीनां सर्वप्रमाणेभ्यः प्रबल-त्वात् । तद्विरुद्धत्वादप्रतिष्ठितत्वाच्च वैशेषिकादियुक्तीनां अदृढतरत्वेन दृढतरत्वस्य दूरापास्तत्वात् । शक्त्यादिग्राहकस्य व्यावहारिकार्थगोचरत्वात् । अविरोधेन: कस्यचिदनुमानस्य प्रथमबाधेन प्रवृत्तया श्रुत्या ऐक्यात्म्यविरोध्यनुमानानां बाधकाभावात् । अन्यथा व्याप्ति-प्रत्यक्षाद्युपजीव्य सजातीयनभोनैल्यप्रत्यक्षविरोधेन नभसि नैल्याभावानुमानाऽनुदयप्रसङ्गात् । तस्मात्सर्वप्रमाणमूर्धन्यतिप्रबलश्रुत्यनुसारित्वात् भगवत्पादीयमेव दर्शनं श्रेयस्करमिति सिद्धम् ॥ ३१ ॥

अस्मिन्नध्यात्मदर्शने हैतुकानामनधिकारं दर्शयति ।

कथमिति । सुधीः अधिकार्यनधिकारिविवेचनकुशलप्रासे पुरुष । कुतर्काशनिकर्कशरवमूर्छितेषु । कुतर्कः वैशेषिकाद्यसच्छास्त्रं स एवाशनिः तत्सम्बन्धिनो ये कर्कशाः श्रवणतः फलतश्च कठिना रवास्तद्व्याख्यानादिरूपाः तै मूर्छिताः आसन्न-

एषु उक्तरीत्या बलीय । उपसंहारस्य व्याख्यानरूपत्वेन तद्विरोध्युपक्रमाप्रामाण्योपपत्तेस्तस्य ततोऽपि प्राबल्यम् । एकश्रौतत्वादपि बहुश्रौतस्य प्राबल्यात् अभ्यासस्योपक्रमोपसंहाराभ्यां प्राबल्यम् । एकत्र बहुवारोक्तत्वादपि मुख्यस्य प्राक्तनापूर्वतावानोऽस्य प्राबल्यम् । फलस्यादृष्टत्वादुपक्रमादिभ्य प्राबल्यम् । करणाकरणयोरिष्टानिष्टरूपनादिरूपार्थवादस्य फलस्यात्राधिक्यादुपक्रमादिभ्यः प्राबल्यम् । उपपत्तेः सर्वमूलत्वेन सर्वत्र प्राबल्यमिति । एतत्सर्वं वाक्यतात्पर्यनिर्णये लिङ्गं भवति इति ज्ञेयम् ।

वेदान्तवल्लकीवर- ।
वादनमतिमधुरमारभेत सुधीः ॥ २२ ॥
गुरुमिह विश्रान्तितरुम् ।
गहनेऽध्वनि न लभेत पुमान्यावत् ॥

मरणा इव नष्टसंज्ञास्तेषु । अत एव शोच्येषु शोचनीयेषु नरापसदेषु । अतिमधुर श्रवणमात्रेण मज्ञावता सद्यो निरतिशयान न्दहेतुम् । वेदान्तवल्लकी वीणा तस्या वरवादन सम्यक् तात्पर्योप पादन कथमारभेत । कथ मित्यनौचित्ये । अहहेति खेदे । अनेन आ रम्भस्याप्यनुचितत्वे कृत्स्नशास्त्रार्थबोधनमनुचितमिति किमु वक्तव्यमिति ध्वनितम् । "नैषा तर्केण मतिरापनेया" इत्यादिश्रुते "न तर्कशास्त्रदग्धाय न शठाय नदम्भिने" इत्यादिस्मृतेश्च । यथा निष्ठुरतराऽशनिनिपातनिर्घोषमूर्छिते पुंसि मधुमधुरवीणावादनारम्भो मतिमतामनुचित तद्वत् कुतर्कहतेषु ब्रह्मविद्योपदेश इति भाव ॥ २२ ॥

अधिकारिणामपि "श्रोतव्य" इति विधिनोक्तमहावाक्यार्थज्ञानानुकूलविचारस्य स्वत पुस्तकपाठादिव्यावृत्तिपूर्वक गुर्वधीनत्वनियमात् । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् । समित्पाणि श्रोत्रिय ब्रह्मनिष्ठ" इत्यादिश्रुतेर्विधिनोपसृताच्छ्रोत्रियत्वादिगुणविशिष्टात्सदाचार्यादेव लब्धा विद्या फलपर्यवसायिनी भवतीति दर्शयति । ०

गुरुमिति । पुमान् अधिकारी पन्थाश्च । इह सर्वानुभवसिद्धे ममारत्यणे गहनेऽरण्ये अध्वनि मार्गविमार्गे । अधिकरणे सप्त

तावत्कथमपसरतु ।
त्रासः पटुतापजननचण्डकरात् ॥२३॥
निपुणैः परीक्षमणो ।
निगम तुलायामुभौ समारोप्य ॥

---

ग्यौ। गुरुं श्रीदेशिकं महान्तं च विश्रान्तितरुं अध्वगश्रमापनोदनक्षमं छायावृक्षं यावत् न लभेत् न प्राप्नोति तावत् । पटुतापजननचण्डकरात् । पटुः शीघ्रः तापश्चाध्यात्मिकाधि-दैविकाधि-भौतिकरूपास्त्रिविधः सन्तापो यस्मात् तथा विधो । जननं जन्म तल्लक्षणश्चण्डकरः सूर्यस्तस्मात् । पटोस्तापस्योष्मणो जनन उत्पादकश्चण्डकरस्तपनः तस्मादिति च। त्रासः भयं कथमपसरतु । कथमित्याक्षेपे । अपसरतु अपगच्छतु । सम्भावनायां लोट्। अपसरणमसम्भावितमित्यर्थः ॥ २३ ॥

ननु—ब्रह्मविद्यावाप्तिविधिनोपसृतादाचार्यादेवेत्यनुपपन्नं "ईश्वराज्ज्ञानमन्विच्छेत्" । "ईश्वरानुग्रहादेव पुंसामद्वैतवासना । महाभयपरित्राणा द्वित्राणामेव जायते" इत्याद्युक्तिदर्शनात् विनापि गुरूपसर्पणं हिरण्यगर्भादीनामिव विद्याप्राप्तिसम्भवात्- इत्याशङ्क्याह । निपुणैरिति ।

निपुणैः वस्तुनिर्धारणसमर्थैर्विद्वद्भिः । उभौ गुर्वीश्वरौ निगमतुलायां श्रुतिलक्षणायां समारोप्य तत्र तत्प्रतिपादकवाक्यसन्दर्भयोरुपलभ्य परीक्ष्यमाणे । गुरुः अस्मदादीनां साक्षात् ज्ञानेनाधिकः भारभूतश्च अभवत् । इति अस्माद्धेतोः तन्नाम तस्याचार्यस्य ना-

गुरुरभवदीश्वरादपि ।
गुरुरिति तन्नाम सार्थकं नाम ॥२४॥
पतितमपि पादपतितम् ।
पावनकरुणाकटाक्षगाङ्गझरैः ॥

स गुरुरित्यभिधानं सार्थकं–गृणाति साक्षादुपदिशति ब्रह्मविद्यामिति यौगिकार्थेन गुरुत्वाख्यगुणाभेदाध्यवसितोत्कर्षवत्त्वलक्षणरूढार्थेन च अन्वर्थम् । नामेति प्रसिद्धौ । अयं भावः ।

"ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः ।
ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम्" ॥

इति स्मृत्यनुरोधेन विनाप्याचार्योपसर्पणं विद्याप्राप्तिः हिरण्यगर्भादीनां यद्यप्यधिगता तथापि सा जन्मान्तरार्जितोत्कटकर्मोपास्तिवशादीश्वरानुगृहीतानां तेषां जन्मान्तरीयश्रवणादिजन्यसंस्कारादप्युपपन्ना । अस्मदादीनां तु "आचार्यवान् पुरुषो वेद । श्रोतव्यमेनेन सुज्ञानाय प्रेष्ट ह्याचार्याद्ध्येव विदित्वा साधिष्ठं प्रापत्"इत्यादिसावधारणश्रुतिवशादाचार्यादेव विद्याप्राप्तिरिति निश्चीयते।त्वदुक्तवचनं तु ईश्वरस्य गुरुरूपेण उपदेष्टृत्वे ऽप्युपपद्यते। अत एवेश्वरस्यापि ज्ञानदाने गुरुरूपसापेक्षत्वाद्गुरोरीश्वरादप्याधिक्यमिति सूचितम् ॥ २४ ॥

इदानीं गुरौ मनन्यपेक्षयापि अतिशायितप्रेमभक्तिकर्तव्यतां द्योतयन् तदपेक्षया परमपावनत्व–जन्मवियोजकत्वादिगुणोत्कर्षमाह । पतितमिति ।

पादपतितं पादयोः पतितं प्रणतम् । पतितमपि पातकिनमपि

शोधयतु कैव जननी- ।
स्तन्यवियोक्त्रीं विनेह गुरुमूर्तिम् ॥२५॥
प्राप्तापि शिरसि देशिक- ।
पदपद्मपरागपावितापाटूः ॥

अर्थाज्जननीति लभ्यते। पावनकरुणाकटाक्षगाङ्गझरैः। पावना ये करुणयैव प्रवृत्ताः कटाक्षास्त एव गङ्गासम्बन्धिनो झराः प्रवाहास्तैः। स्तन्यवियोक्त्रीं स्तन्यं वियोजयति तत्प्रयोजककजन्मवियोजनेनेति तथोक्तां गुरुमूर्तिं गुरुस्वरूपां अर्थाज्जननीमिति लभ्यते। विना इह जगति। केत्याक्षेपे। जननी माता शोधयतु अविद्यापङ्कक्षालनेन स्वच्छीकरोतु। नहि प्रसिद्धजननी वत्सलापि कटाक्षैः पतितं पावयति अविद्यापङ्कं वा क्षालयति जन्मवियोजनेन स्तन्यं वा वियोजयतीति भावः ॥ २९ ॥

परोक्षतोऽपि कृता गुरुभक्तिरेकलव्यन्यायेन सद्यः परमपुरु-

१ एकलव्यन्यायो यथा—निषादराजस्य हिरण्यधनुषः पुत्रः एकलव्यो नाम धनुर्विद्यामभ्यसितुं कुरूणां पाण्डवानां चाचार्यं भगवन्तं द्रोणमभ्याजगाम। स च नैषादिरिति मत्वा धार्तराष्ट्रपाण्डवेभ्योऽयमधिको माभूदिति तं शिष्यं न प्रतिजग्राह। तदा—

स तु द्रोणस्य शिरसा पादौ गृह्य परन्तपः ।
अरण्यमनुसम्प्राप्य कृत्वा द्रोणं महीमयम् ॥
तस्मिन्नाचार्यवृत्तिं च परमामास्थितस्तदा ।
इष्वस्त्रे योगमातस्थे परं नियममास्थितः ॥
परया श्रद्धयोपेतो योगेन परमेण च ।
विमोक्षादानसन्धाने लघुत्वं परमाप सः ॥

इत्यादि महाभारते आदिपर्वणि शतोपरिद्वात्रिंशेऽध्याये द्रष्टव्यम् ।

पतितमपि नयति निर्भय- ।
पदवीमदवीयसीमसुखाम् ॥ २६ ॥
श्वसितुमपि नासमर्थो ।
दुःसहबहुजननयन्त्रणक्षुण्णः ॥

---

पार्थपर्यवसायिनी किमुत तत्सान्निध्यौ कृतेति दर्शयति । मान्नापीति ।

देशिकपदपद्मपरागपाविता । देशिकस्य श्रीगुरोः पदे पाद्रा-येव पद्मे तयोः परागैः रजोभिः पाविता पवित्रिता पादुः उपा-नत् शिरसि मापिसुकृतवशाल्लब्धापि । पतितमपि पातकिनमपि अन्यत्र शयानमपि । असीमसुखां निरवधिकाऽऽनन्दाम् । निर्भय-पदवीं जनन-मरणादिसांसारिकभयशून्यं मोक्षमार्गम् । अदवीय-सीं दूरतरा न भवतीत्यदवीयसीं अतिनिकटामिति यावत् । विधेयविशेषणमेतत् । नयति मापयति । लोके ह्युपानत् चरण-धृता गच्छन्तं दूरपदवीं दूरत्वमपनीयैव नयति इयन्तु शिरसि धृ-तापि शयानमपि अज्ञानावस्थायां अति दूरामपि पदवीं ज्ञानेन दूरत्वमपनीय अतिनिकटं नयतीत्याश्चर्यमिति भावः ॥ २६ ॥

अनादिपरमतीव्र-जन्म-जरा-मरणादिमहादुःखप्रबन्धप्रशमन-परमौषधभूतः श्रीगुरुकरुणाकटाक्षः सर्वेषामसुलभोऽपि बहु-तरजन्मपरम्परार्जितैः कैरपि पुण्यपुञ्जैरहो चिराय मया सम्प्रति लब्ध इति समाश्वासयन्नाह । श्वसितुमपीति ।

दुःसहबहुजननयन्त्रणक्षुण्णः । दुःसहानि सोढुमशक्यानि यानि बहूनि जननानि तल्लक्षणैर्यन्त्रनिष्पीडनैः क्षुण्णः इ-

गमितश्चिराय संज्ञाम् ।
श्रीगुरुमुखचन्द्रचन्द्रिकासुधया ॥२७॥
अक्षरमेकमशिक्षय- ।
दनुकम्प्य मुदा स देशिकः श्रीमान् ॥

क्षुदण्डवत्सघूर्णितः सन् । अत एव नष्टसंज्ञ इति यावत् । अर्थात् अहं श्वासितुमपि श्वसित-वदनायाससाध्यमपि श्रेयः साधनं कर्तुं निःश्वासितुमपि ईशः समर्थः नासं नाभवम् । अपिना क्रियान्तरे न समर्थ इति किमुवक्तव्य मिति द्योत्यते । परन्तु चिराय अतिदीर्घकालेन । श्रीगुरुमुखचन्द्रचन्द्रिकासुधया । श्रीगुरोर्मुखचन्द्रस्य चन्द्रिका प्रणवमहावाक्यार्थोपदेशरूपा सैव सुधा जरामरणादिनिबर्हणादमृतं तया संज्ञां तत्वज्ञानलक्षणां चेतनां गमितः प्रापितः। भवति हि मूर्छितः सुधासेकाल्लब्धसंज्ञ इति ॥२७॥

प्रणवस्य महावाक्येन समानार्थतां समानप्रयोजनतां प्रदर्शयन् परमहंसस्य प्रणवैकनिष्ठताया आवश्यकत्वं दर्शयति । अक्षरमिति ।

*श्रीमान्* अखिलश्रुति-तदर्थज्ञानसम्पत्तिमान् । सकलब्रह्मविन्मौलिमणित्वेन प्रसिद्धः अवाङ्मनसगोचरमहनीयस्वभावः देशिकः आचार्यः अनुकम्प्य दययाऽनुगृह्य मुदा । अत्यन्तमार्तमनन्योद्धार्यमप्यमुमुद्धारिष्यामीति हर्षेण । एकमक्षरम् "ॐ मित्येतदक्षर मिद्ं सर्वं"।"ओमित्येकाक्षरं ब्रह्म"इत्यादिश्रुति-स्मृतिप्रसिद्धं प्रणवं अशिक्षयत् अर्थप्रतिपादनपूर्वकमग्राहयत् । तत्क्षणमेव तस्मिन्क्षण एव साक्षादपरोक्षं "यत्साक्षादपरोक्षं ब्रह्म"

तत्क्षणमेव च साक्षा- ।
दक्षरमेकं तदाऽऽसमाश्चर्यम् ॥ २८ ॥
अद्य मम सुप्रभातम् ।
सद्यः शमितान्धकारसर्वस्वम् ॥

इतिश्रुतेः । तत्सर्वोपनिषत्प्रसिद्धम्। "ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविध स्मृतः"इति स्मृते.। तच्छन्दाभिधेयं वा एकमद्वितीयमक्षरं न क्षरति न नश्यतीत्यक्षरम्। अश्नुते व्याप्नोतीति वा परं ब्रह्म। "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति।तथा तदक्षरमधिगम्यत"इत्यादिश्रुतेः। आस नित्य-शुद्ध-निरतिशयानन्दसुखेनाविरभत्तम्। "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः"इतिश्रुते । चकार. अनर्थनिवृत्तिसमुच्चयार्थ. । तथाच निरस्तानर्थानिरतिशयानन्दावाप्तिलक्षण. परमपुरुषार्थो मया लब्ध इत्यर्थः । आश्चर्यमिति भवति हि श्रोतुरुपदिष्टवर्णतादात्म्यापत्ति. आश्चर्यमिति ॥ २८ ॥

ननु–नित्यसिद्धस्वरूपेणाविरभवमित्ययुक्त ज्ञानोत्तरलभ्यस्वरूपस्य रसौपधिसम्पर्केण धातूनां सुवर्णभाववदागन्तुकत्वात् । तद्रूपस्य भाक् सत्वे ससारानुपपत्ते.–इत्याशङ्क्याह । अद्येति ।

अद्य गुर्वनुग्रहशारदभास्करदिने मम आचार्यानुगृहीतस्य परिपक्वपुकृतराशे. सद्यः शमितान्धकारसर्वस्वं। सद्य स्वोत्पत्तिसमय एव शमित ध्वस्त अन्धकारस्य अज्ञानस्य तिमिरस्य च सर्वस्व विलासस्वरूप येन तत् सुप्रभातं सम्यक् ज्ञानमुत्पन्नम् । भा-

दृष्टं हि चिरगुहान्तर्-।
नष्टं निजवस्तलभ्यलाभोऽयम् ॥ २९ ॥

---

वे कः । शोभनमहर्मुखं च । हि यस्मात् । चिरगुहान्तर्नष्टं चिरं अनादिकाले गुहान्तः गुहैव गुहा बुद्धिलक्षणातत्संस्कृता विद्यालक्षणा वा अविद्या लक्षणैव वा, गिरिदरी च । तस्या अन्तः वस्तुनः सर्वान्तरत्वात्। "यो वेद निहितं गुहायां । अयमात्मा सर्वान्तरः" इति च श्रुतेः । नष्टं अदर्शनं गतं निजवस्तु स्वरूपलक्षणं परमार्थतत्वं स्वीयं रत्नात्मवस्तु च । दृष्टं करतलामलकवदपरोक्षीकृतम् । हीति निश्चये । अत्र दृष्टमिति दर्शने प्रकृते लाभोक्तिरात्मनो लाभो न-ज्ञानातिरिक्त इति दर्शनार्था । अनेन "ह्येतत्सर्वं वेद यथाह वै पदेनानुविन्देत्" इति श्रुतौ भाष्यं 'आत्मनो लाभो अज्ञानमेवात्मनो लाभो न अनात्मलाभवत्प्राप्तप्राप्तिलक्षण इति । अयं अलभ्यस्य नित्यं लब्धुमयोग्यस्य असम्भावितलाभप्रत्याशस्य च लाभोऽयमिति'अयमाभिप्रायः । ज्ञानफलस्य मोक्षस्यागन्तुकत्वे अनित्यत्वेनापुरुषार्थत्वापत्तेः । रसौषधादिकृतसुवर्णस्यापि कालान्तरे नाशादर्शनात् । प्रागपि कल्पितसंसारस्य वास्तवब्रह्मभावाविरोधित्वात् । कण्ठचामीकरन्यायेन नित्यप्राप्तस्याप्यज्ञानादप्राप्तकल्पस्य ज्ञानात्प्राप्तिरविरुद्धं "ब्रह्मैव सन् ब्रह्माप्येति । ब्रह्म-वा इदमग्र आसीत् । तदात्मानमेव वेदाऽहं ब्रह्मास्मीति तस्मात्सर्वमभवत्" इति च श्रुतेरिति ॥ २९ ॥

आत्मतत्वपरिज्ञानायानात्मपरतत्वपरकापिल्यादिमतकल्पशास्त्रेषु

कपिल-पतञ्जलि-गौतम- ।
कणभुक्प्रमुखाः क्षमां मयि कुरुध्वम् ॥
स्वधनं भवत्सु मोहात् ।
श्रुतिगं विस्मृत्य शोधितं हि मुधा॥३०॥

---

कृतश्रमस्तत्रात्मनस्तत्वमप्रतिपद्य इन्तेतरशास्त्रेषु वृथा मया चिरं परिश्रान्तमित्यनुशोचन्नाह । कपिलेति ।

कपिल-पतञ्जलि-गौतम-कणभुक्प्रमुखा इति सम्बोधनम् । तत्र कपिलः साङ्ख्यशास्त्रप्रणेता, पतञ्जलिर्योगशास्त्रस्य, गौतमो न्यायशास्त्रस्य, कणभूक् वैशेषिकशास्त्रस्य प्रमुखशब्देन जैमिन्यादयो गृह्यन्ते । मयि आरोपयितारि क्षमा चौर्यारोपरूपापराधसहनम् । कुरुध्वं। प्रार्थनायां लोट्। हि यस्मात् श्रुतिगं तत्वमस्यादिश्रुतिप्रतिपाद्य कर्णशष्कुलीगतं च । स्वधनं स्वात्मलक्षणं वित्तम् स्वीयकर्णाभरणलक्षणं च । विस्मृत्य अनधीतवाक्यादापाततः प्रतिपन्नमपि पुनरविचिन्त्य । अन्यत्र स्पष्टम् । मोहात् तत्वप्रतिपादकत्वभ्रमात् अपहारित्वभ्रमाच्च । भवत्सु भवदीयतन्त्रेषु भाष्येषु युष्मासु च । मुधा वृथा शोधितं विचारितं गवेषितं च। स्वस्येऽप्यात्मधनमस्पृशत्सु भवत्सु तदपहारित्वमारोप्य वृथा शोधनं महदनुचितं मोहात्कृतमिति क्षमापनमुचितम् इत्युपहासः ॥ ३० ॥

ननु—इतरशास्त्रवदुपनिषदामपि नात्मपरत्वं तत्र प्राणोपास्तिविधीनां बहुलमुपलम्भात् । आत्मवाक्येष्वपि “आत्मा वा अरे द्रष्टव्यः । आत्मानमेव लोकमुपासीत” । “येत्वक्षरमनिर्देश्यमव्यक्त

विकलाखिलविषयो मयि ।
सकलाः निघ्नन्ति साधुगुणवृत्या ॥
श्रुतयो धुतान्यगतयो ।
मतयो यतिनामिवौपनिषदनये ॥३१॥

---

पर्युपासते''इत्यादिश्रुतिस्मृतिषु विधिप्रत्ययोपास्तिपदयोर्दर्शनात् । ज्ञानस्य वा प्रसङ्ख्यानस्य वा जीवे ब्रह्मत्वारोपेणोपासनस्य वा विधानात् सर्वोपनिषदां विधिपरत्वावश्यंभावात्—इत्याशङ्क्याह । विकलेति ।

विकलाखिलविषयः । विकलाः अविद्यमानाः अखिलाः समस्ताः विषयः आत्मज्ञान-तत्प्रसङ्ख्यान-तदुपासनविषया नियोगा यासु तारतथोक्ताः त्यक्तसर्वकर्माणश्च । सकलाः श्रुतयः''सत्यं ज्ञानमनन्तं ब्रह्म।योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः'' इत्याद्यवान्तरवाक्यतत्त्वमस्यादिमहावाक्यरूपाः। धुतान्यगतयः। धुताः परिहृता अन्यस्मिन् ब्रह्मलोकादौ ब्रह्मविदां गतिरर्चिरादिमार्गेण गमनं याभिस्तास्तथोक्ताः सत्यः। ''न तस्य प्राणा उत्क्रमन्ति । अत्रैव समवलीयन्त''इतिश्रुतेः । अन्यत्र धुता तिरस्कृता अन्यगतिः अन्यस्मिन् ऐहिक-पारलौकिकविषयमात्रे गतिर्गमनमभिलाषो याभिस्ताः। यद्वा धुता सम्यक् परिशील्य तत्वप्रतिपादकत्वाभावनिश्चयेन परित्यक्ता अन्यस्मिन् शास्त्रान्तरे गतिरिवगतिः मोक्षोपायत्वज्ञानं याभिस्ताः । औपनिषदनये वेदान्तशास्त्रे यतीनां मोक्षाय यतमानानां परमहंसानां मतयो मनोवृत्तय इव

सन्निधिमात्रादसुखम् ।
सुखयसि निःस्वे स्वलाभमपर्यसि ॥

साधुसंसर्गाद्यगोचरतया अखण्डैकरसवस्तुविषयत्वं यथा भवति तथा गुणवृत्त्या अमुख्यवृत्त्या जहदजहल्लक्षणयेति यावत् । अन्यत्र साधुगुणवत्त्या शमदमादिसद्गुणवत्त्या मयि प्रत्यगात्मनि स्नेहं कुर्वन्ति । उपक्रमादिषड्विधलिङ्गावधारिततात्पर्येण प्रतिपादयन्तीति यावत् । अन्यत्र सादरं परिशीलयन्ति । अयं भावः । प्रमाणादिवाक्यानां प्रत्यग्ब्रह्मणमुख्यैवयलिङ्गाभावेनोपासितविधिपरत्वेऽपि ।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इत्युक्तषड्विधलिङ्गावगतप्रत्यग्ब्रह्मैक्यता पर्यकतत्त्वमस्यादिमहावाक्यानामुपासनापरत्वस्य वक्तुमशक्यत्वात् । प्रमाणैकतन्त्रस्य ज्ञानस्य पुरुषतन्त्रत्वासम्भवेनाविधेयत्वात् । प्रसङ्ख्यानस्य निर्विषयस्य विधातुमशक्यत्वात् । विषयप्रसङ्ख्यानोभयपरत्वे च वाक्यभेदाज्जीवे ब्रह्मत्वारोपेणोपासनस्य च विषयाऽसिद्धावसम्भवात् उपास्यस्य च विषयत्वावश्यम्भावेन "नेदं यदिदमुपासते" इति श्रुत्या ब्रह्मत्वप्रतिषेधादुपासितफलभूतस्य च मोक्षस्य हिरण्यगर्भादिवदनित्यत्वापत्तेः । आत्मवाक्येषु श्रुतीनामपि लिङ्गादीनामर्थे ज्ञानादौ पापाणे क्षुरतैक्ष्ण्यवत्कुण्ठीभावात् सच्चिदानन्दप्रत्यग्ब्रह्मपरा वेदा इति सिद्धम् ॥ ३१ ॥

आत्मनः सच्चिदानन्दरूपतामेव श्रुति-युक्तिभ्यामुपपादयन्नाह । सन्निधीति ।

बोधयसि जडमिति ।

श्रुतिर्वृंदं स्तौत्यपि तु न गुणगन्धः॥३२॥

---

अमुत्र स्वभावतो दुःखालयमपि जायापत्यादिकं सुखहीनं पुरुषं च । सन्निधिमात्रात् आध्यात्मिकसम्बन्धमात्रात् सामीप्यमात्राच्च । सुखयसि सुखात्मना ग्राहयसि । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेः । युक्तं चैतत् । सुख-दुःखात्मना प्रतीयमानस्य प्रपञ्चस्य न तावत्स्वतः उभयरूपत्वम् । विरोधात् । अतः परमप्रेमास्पदत्वेन प्रमितसुखरूपे प्रत्यगात्मन्यध्यस्तत्वादेव तस्य सुखरूपत्वेन प्रतीतिरिति । पक्षान्तरे सुखयसि सुखिनं करोषि । निःस्वे स्वतः स्वरूपशून्ये दृश्ये स्वलाभं सत्त्वेन प्रतीतिक्षमत्वलक्षणस्वरूपलाभं अर्पयसि ददासि । "अनुज्ञाता ह्ययमात्माऽस्य सर्वस्य स्वात्मानं ददाति" इति श्रुतेः युक्तमेतदपि । सन् घटः पट-इत्यादिसत्त्वेन प्रतीयमानानामनन्तपदार्थानां प्रत्येकं स्वतःस्वत्वकल्पनायां गौरवत्वात् । सत्ताजातिप्रयुक्तस्य तादृशस्य प्रत्ययस्य सामान्यादावसम्भवात् । सत्तातत्सामानाधिकरण्यान्तरसम्बन्धस्यानुगतत्वेनैकाकारतादृक्प्रतीत्यनियामकत्वात् । सर्ववादिसिद्धसद्रूपब्रह्माध्यस्तत्वादेव सर्वस्य सत्त्वेन प्रतीयमानत्वं, न स्वत इति। निःस्वे दरिद्रे स्वलाभं स्वलब्धं धनं अर्पयसि प्रयच्छसि । जडं अचेतनं प्रकाशयसि। "तमेव भान्तमनुभाति सर्वं यस्य भासा सर्वमिदं विभाति" इति श्रुतेः । युक्तमेतदपि सुप्तोत्थितस्य 'सुखमहमस्वाप्सं' इति सुखस्वानुभवत्वपरामर्शदर्शनात् । अनुभवमन्तरे-

ण च परामर्शानुदयात् । सुषुप्तौ च ज्ञानसामान्यसामग्र्यभाव स्य निर्विवादत्वात् । परिशेषादात्मन एव तत्सर्वदा सिद्धे ।तस्य च ज्ञानान्तरवेद्यत्वेऽनवस्थापत्ते स्वप्रकाशसिद्धौ तदन्यस्तत्वे नैव सर्वजडमपभ्रमातिमास । न चैव सर्वदा तत्प्रतिभासनप्रस- ङ्ग । चैतन्यस्य सर्वाधिष्ठानतया सर्वसम्बन्धत्वेऽप्यविद्यावृतत्वा त्तदावरणप्रतिभासभङ्गश्चक्षुरादिद्वारकतत्तदाकारान्त कर णवृत्त्युत्पादाभ्यामेव तत्तद्विषयप्रतिभासाव्यवस्थोपपत्तेरिति । प- क्षान्तरे जड मूढ बोधयसि सकलशास्त्रार्थसमर्पणेनैव पण्डित करोषि। इति उक्त प्रकारेण श्रुतिवृन्द श्रुतीना उपनिषदा, श्रुत शास्त्रश्रवणमेषामस्तीति व्युत्पत्त्या श्रुतीना पण्डितानां वृन्द समू ह । स्तौति सर्वो ऽस्पष्टस्वरूपेण सम्बोधयति । उक्त हि वार्तिके।

"स्वामी सन्निह भृत्येन स्वामिनेव नियुज्यते ।
सम्बोधनीय एवासौ सुप्तो राजेव बन्दिभि" ॥

इति । पक्षान्तरे तु स्पष्टम् । अत्र स्तुते कर्माकाङ्क्षा यामस्मिमयीति पद गम्यते । तस्य चैकात्वलक्ष्य प्रत्यगात्मा । अन्यत्र वाच्यो नक्ता अर्थ । अन्यत्र नाहमसीत्यनुभवानुकूल्या- दात्मन उक्तस्य तद्रूपसम्भवेऽपि न मुख्य ज्ञानरूपत्वसम्भव । त यो परस्पर व्यभिचारेण भिन्नत्वात् । अह सुखी जनामीत्यात्म गुणत्वानुभवाच्चेत्याशङ्क्याह । अपि त्वित्यादिना अपित्विल्युक्तश ङ्कानिरासार्थम्। मयि प्रत्यगात्मनि गुणगन्ध गुणलेश एकोऽपि गु णो नास्तीत्यर्थ ।"केवलो निर्गुणश्च"इति श्रुते ।पक्षान्तरे तूक्तरीत्या पण्डिता स्नेहान्मा स्तुवन्ति पर मयि तु न कोऽपि गुणलेश इति विनयोक्ति ॥ १२ ॥

उपधाभिरात्मभूत्या ।
अपि हन्त चिराय सच्चिदानन्दाः ॥
भिन्नाः परं तु नृपवत् ।
बहु मन्त्रनयैर्मदैकरस्यमिताः ॥३३॥

---

ननु तर्हि-अहं सुखी-इत्यादिदर्शितानुभवस्य का गतिरित्याशङ्कयोपाधिकृतभेदेन तदुपपत्तिरित्याह ।

उपधाभिरिति। आत्मभूता अपि प्रत्यगात्मनां परस्परेण च वस्तुत एकीभूता अपि,अन्यत्र आत्मवदाप्ता अपि। सच्चिदानन्दाः सदादिपदलक्ष्याः।वाच्यभेदनिबन्धनं बहुवचनम्। चिराय अनादिकालादारभ्य उपधाभिः अन्तःकरणवृत्युपाधिभिः, अन्यत्र उपजापैः अर्थात् नृपवदिति अत्रापि सम्बध्यते। भिन्नाः प्रत्यगात्मनः परस्परस्माच्च भेदं प्रापिताः। नृपपक्षे तु मत्त' परस्परं च भेदं अनैकत्वं प्रापिताः। परन्तु बहुमन्त्रनयैः बहुभिर्मन्त्रैः "सत्यं ज्ञानमनन्तमित्याद्यैः, रहस्यालोचनैश्च नयैः । वस्तुन उपाधिपरामर्शमन्तरेण वस्तुतो भेदग्राहिमानाभावादियुक्तिभिः। राजनीतिभिश्च । नृपवत् सामन्तराज इव । मदैकरस्यं मयि प्रत्यगात्मनि राजविशेषे च। ऐकरस्यं एकस्वभावतां मुख्यप्रेमवत्त्वं च इताः प्राप्ताः। तथाचान्तःकरण-तद्वृत्तीनां परस्परं धर्मधर्मिभावप्रतिभासो वस्त्वैक्येऽपि न निरुध्यते। ज्ञान-सुखवैजात्यप्रत्ययस्तु वैचित्र्यप्रयुक्तावच्छेदकवृत्तिवैजात्यकृतो न वास्तव इति भावः ॥ ३३ ॥

मयि पृच्छति निजतत्त्वम् ।
माया साक्षीति मार्ष्टुमपवादम् ॥
अपवादमेव कुरुते ।
हन्तार्थपरो नु योऽपि वेदान्तः ॥ २४॥

---

एवं विधिमुखेनात्मतत्त्वप्रतिपादकानामवान्तरवाक्य-महावाक्यानां तात्पर्यमुपवर्ण्य इदानीमितरान्निषेधमुखेन प्रतिपादकानां "अस्थूलमनणु नान्तःप्रज्ञं न बहिःप्रज्ञं, अथात आदेशो नेतिनेति" इत्यादिवाक्यानां तात्पर्यार्थमाह ।

मयीति । मयि आत्मनोऽप्यसंसारित्वप्रतिपादकसांख्यादिशास्त्रैः तत्संसारित्वप्रतिपादकवैशेषिकादिशास्त्रैश्च तथा सुषुप्त्याद्यवस्थायां संसारित्वानुभवैश्च स्वतत्त्वं प्रति विप्रतिपन्ने मयि मायासाक्षी अविद्या-तत्कार्यसाक्षी इत्यपवादम् । चक्षुषः साक्षी श्रोत्रस्य साक्षी वाचः साक्षी मनसः साक्षी बुद्धेः साक्षी प्राणस्य साक्षी तमसः साक्षी सर्वस्य साक्षी" इतिश्रुते । आपाततः प्रासमपमर्था मार्ष्टुं निरसितुं निजतत्त्वं आत्मयाथात्म्यं पृच्छति सति जिज्ञासमाने। विधिना गुरूपसर्पणपूर्वकं विचारयति सतीति यावत् ।अत्र प्रश्नस्य प्रष्टव्यार्थनिर्णयमात्रप्रयोजनकत्वेन प्रश्नदशायामभिसंहितत्वादुक्तापवादमार्जनस्य तत्फलत्वेनानभिसंहितत्वेऽपि मार्ष्टुमिति तुमुना प्रश्नोद्देश्यत्वेनोक्तिःवक्तुरुक्त्यवस्थायां तत्त्वज्ञतया स्वकृतप्रश्नतत्त्वनिर्णयद्वारा मायासाक्षित्वपर्यवसितसर्वधर्ममार्जनफलकत्वपर्यवसायित्व सम्पन्नमिति फलप्रदर्शनार्था । यद्वा

सत्यसुखबोधभूमा ।

त्वमसि न दुःखीति शाश्वतीं वाणीम् ॥

---

साक्षित्वस्यापि सावयदुःखादिघटितत्वेन हेयतया तन्मार्जनस्य प्रश्नदशायामपि मुख्योद्देश्यत्वेन प्रतिसन्धानं सम्भवतीति न काप्यनुपपत्तिः । पक्षान्तरे मायासाक्षी कूटसाक्षीत्यपवादं मिथ्यापवादं मार्ष्टुं निजतत्वं पृच्छति प्रश्नं कुर्वाणे सतीत्यर्थः । योऽपि प्रसिद्धः वेदान्तः उपनिषत् । अन्यत्र अन्तर्मनसि यः वेद जानाति सोऽपि अपवादं नेतिनेतीत्याह । वीप्सया साक्षित्वादिसर्वधर्मप्रतिषेधमेव कुरुते । तथाचोक्तं वार्तिके ।

" अज्ञानमात्रोपाधित्वादविद्याप्रुपितात्मभिः ।
कौटस्थ्यान्निर्द्वयोप्यात्मा साक्षीत्यध्यस्यते जडैः" ॥

इति । अन्यत्र तमेव मिथ्यापवादं कुरुत इत्यर्थः । हन्तेति हर्षे खेदे च । अर्थपरः परमार्थतत्परः उत्कोचद्रव्यकांक्षी च । नु इति वितर्के । लोके हि अपवादपरिजिहीर्षया यथार्थवादित्वबुद्ध्या पृष्टाः निरपवादमन्तर्जानन्तोऽपि द्रव्यजिघृक्षवस्तमेवापवादं दृढीकुर्वन्तीति प्रसिद्धम् ॥ २४ ॥

विधिमुखेन निषेधमुखेन च प्रवृत्तानां वेदान्तानामर्थं सङ्कल्य्य दर्शयन् संसारनिवृत्त्यर्थमेव तेषां प्रवृत्तिं दर्शयति ।

सत्येति । त्वं सत्यसुखबोधभूमासि सत्यं ज्ञानं "यो वै भूमा तत्सुखं" इति श्रुतिप्रसिद्धः सच्चिदानन्दपूर्णात्मा । सत्यादिपदानां

जननमपनेतुकामां ।
जननीति वदन्तिहन्त साहसिकाः ॥३५॥

सर्वेषां कर्मधारयः । भूमेति मातृ-भवित्रोरभेदो निरतिशयपूर्णत्व-लाभार्थः । असि भवसि । अनेन विधिमुखप्रवृत्ततत्त्वमस्यादिसर्व-महावाक्यार्थःसंगृहीतः-सत्यादिग्रहणं नित्य-शुद्धत्वादीनामप्यु-पलक्षणम् । यथाहुः ।

"नित्यः शुद्धो बुद्ध-मुक्तस्वभावः सत्यः सूक्ष्मः सन् विभुश्चाद्वयश्च ।
आनन्दाब्धिर्यः परः सोऽहमस्मि प्रत्यग्धातुर्नात्र संशीतिरस्ति" ॥

दुःखी नास्ति । "न लिप्यते लोकदुःखेन बाह्यः" इतिश्रुतेः ।

इदं च "अस्थूलमनणु"इत्यादिसर्वद्वैतनिषेधानामुपलक्षणम् । त-थाच निषेधमुखप्रवृत्तसर्वश्रुत्यर्थः संगृहीतः । इतिशब्दः उक्त-द्विविधश्रुतिसङ्कलनार्थः । जननं जन्मोपलक्षितं संसारं । अपनेतु-कामां समूलमुन्मूलयितुं तात्पर्येण प्रवृत्ताम् ।शाश्वतीं नित्यां अ-पौरुषीमिति यावत् । अनेन श्रुतेर्वैशेषिकाद्यभिमतपौरुषेयत्व-निरासेन निर्दोषत्वात्सर्वप्रमाणाधिकत्वं दर्शितम् । वाणीं श्रुतिल-क्षणाम् । साहसिकाः सहसैव सर्वं परित्यज्य चरन्तीति परमहंसाः अविचार्य वादिनश्च । जननीति वदन्ति मातृबद्धितैषिणीत्वात् ।

"यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः ।
सर्ववन्द्येन यतिना प्रसूर्वन्द्या प्रयत्नतः" ॥

इति वचनात् यावदायुर्वन्दनीयत्वाच्च । पक्षान्तरे जननी जन्महेतुः । हन्तेति खेदे । भवन्ति हि जननापहारिणीं जनन-हेतुरिति वक्तारः साहसिका इति भावः ॥ ३५ ॥

पाण्डित्यमपि विधत्ते ।
बाल्यं मौनेन फलति तदलौल्यम् ॥

---

इत्थं महावाक्यार्थं सपरिकरं प्रतिपाद्य इदानीं तत्साक्षात्कार-साधनानि "तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ

---

१ यस्मात् पूर्वे ब्राह्मणा एतमात्मानमसाधनफलस्वभावं विदित्वा सर्वस्मात्साधनस्वरूपादेषणालक्षणात् व्युत्थाय भिक्षाचर्यं चरन्तिस्म । दृष्टादृष्टार्थं कर्म तत्साधनं च हित्वा । तस्मादद्यत्वेऽपि ब्राह्मणः ब्रह्मवित् पाण्डित्यं पण्डितभावं एतदात्मविज्ञानं पाण्डित्यम् । तन्निर्विद्य निःशेषं विदित्वा आत्मविज्ञानं निरवशेषं कृत्वेत्यर्थः । आचार्यत आगमतश्च एषणाभ्यो व्युत्थाय । एषणाव्युत्थानावसानमेव हि तत्पाण्डित्यम् । ज्ञानबलभावेन बाल्येन तिष्ठासेत् स्थातुमिच्छेत् । साधनफलाश्रयणं हि बलमितरेषामनात्मविदाम् । तद्बलं हित्वा विद्वानसाधनफलस्वरूपात्मविज्ञानमेव बलं तद्भावमेव केवलमाश्रयेत् । तदाश्रयणे हि करणान्येषणाविषये एनं हृत्वा स्थापयितुमुत्सहन्ते । ज्ञानबलहीनं हि मूढं दृष्टादृष्टविषयायामेषणायामेवैनं करणानि नियोजयन्ति । बलं नाम आत्मविद्यया अशेषविषयदृष्टितिरस्करणम् । अतस्तद्भावेन बाल्येन तिष्ठासेत् । "नायमात्मा बलहीनेन लभ्य" इति श्रुत्यन्तरादिति भावः ।

२ बाल्यं च पाण्डित्यं च निर्विद्य निःशेषं कृत्वा अथ मननात् मुनिर्योगी भवति । एतावद्धि ब्राह्मणेन कर्तव्यम् । 'अमौनं च' आत्मज्ञानानात्मप्रत्यय-तिरस्कारौ पाण्डित्य-बाल्याख्यौ निःशेषं कृत्वा । 'मौनं' नामानात्मप्रत्यय-तिरस्करणस्य पर्यवसानं फलम् । तच्च निर्विद्य अथ ब्राह्मणः कृतकृत्यो भवति ब्रह्मैव सर्वमिति प्रत्यय उपजायते । स ब्राह्मणः कृतकृत्योऽतो ब्राह्मणः निरुपचरितब्राह्मण्यवानित्यर्थः ।

तदपि मदीयं भुवन- ।
त्रितयगतार्थापलापनिपुणमहो ॥३६॥
श्रवणं मननं ध्यानम् ।
साधनमिति मुक्तये वदन्तु परे ॥

---

ब्राह्मणः" इतिश्रुतिप्रमाणकानि श्रवणमनन-निदिध्यासनान्याह ।

पाण्डित्यमिति । मदीयं पाण्डित्यं पण्डाशब्दजन्यं साऽस्य सं-जातेति पण्डितः तस्य भावः पाण्डित्यं श्रवणं कर्तृ । अपिर्विरोधे। बाल्यं बालभावं श्रुतस्यार्थस्य युक्तिभिरसम्भावनानिरासेन दृढीक-रणे मननकर्म विधत्ते सम्पादयति । मदीयं तद्बाल्यमपि कर्तृ । मौ-नेन मुनिभावेन निदिध्यासनेन विपरीतभावनासंस्कारमात्रं निरस्य । अलौल्यं कुद्वैराग्यानि स्थैर्यं फलति जनयति । मदीयं तद-पि अलौल्यमपि भुवनत्रितयगतार्थापलापनिपुण भुवनत्रितयं गता विद्यमाना ये अर्थाः पदार्थास्तेषां साधिकरणानामपलापे प्रत्यक्त्व[साक्षात्कारोपहारेण बाधे निपुणं समर्थम् । अत्र वि-द्वत्तया बालभावस्तेन विचारतात्यागपूर्वकमलौल्यशब्दितमचापल-मलोलुपत्वं च । ततश्च त्रिजगज्जनधनापह्नव इति कारणविपरी-तकार्योत्पत्तिराश्चर्यमित्यहो इत्यनेन द्योत्यते ॥ ३६ ॥

पाण्डित्यादिशब्दानामर्थं प्रकटयन्ननुष्ठितश्रवणादिसाधन-स्यापि पुरुषार्थः श्रीगुरुप्रसादैकलभ्य इति तन्माहात्म्यमस्त-येनाह ।

शृणु मामकसिद्धान्तम् ।
श्रीगुरुकरुणाकटाक्षलेश इति ॥ ३७ ॥
न रथो न हयो नार्थो ।
नचशाक्तिगुणा न दुगवार्ताऽपि ॥

श्रवणमिति । परे अन्ये श्रवणं सर्वेषां वेदान्तानां अद्वैते ब्रह्मणि तात्पर्यावधारणानुकूलविचाररूपान्तःकरणवृत्तिविशेषः । मननं श्रुतस्यार्थस्य युक्तिभिरनुचिन्तनरूपः । ध्यानं श्रुतमतार्थविषयकं विजातीयप्रत्ययतिरस्कारपूर्वकसजातीयप्रत्ययप्रवाहीकरणं एतत्त्रितयं मुक्तिप्राप्तेः साधनं हेतुरिति वदन्तु । मामकसिद्धान्तं मामकः मदीयः सिद्धान्तस्तं शृणु ।कोऽसौ सिद्धान्त इत्यपेक्षायामाह । श्रीगुरुकरुणाकटाक्षलेश इति श्रीगुरोचार्यस्य करुणयैव यः कटाक्षः अपाङ्गदर्शनं तस्य लेशः ईषद्दर्शनमिति यावत् । एकं साधनम् । इति एवंभूतमित्यर्थः ॥ ३७ ॥

श्रीगुरुप्रसादलब्धं निष्प्रपञ्चपरमानन्दसाम्राज्यं स्वयमनुभूयमानमभिनयति ।

१ बृहदारण्यकेऽपि—

न तत्र रथा न रथयोगा न पन्थानो भवन्ति ।
अथ रथान् रथयोगान् पथ. सृजते" ॥

अत्राय पुरुषः स्वयञ्ज्योतिर्भवतीत्युच्यते स्वप्नदर्शनस्य वैलक्षण्यात् । जागन्रिते हि इन्द्रिय बुद्धि-मनआलोकादिसङ्कीर्णमात्मज्योतिः । स्वप्ने तु इन्द्रियान् । तदनुग्राहक आदित्याद्यालोकप्रभावाच्च विविक्तं केवलं भवति । स्वप्ने विषया रथादिलक्षणाः न सन्ति । तथा 'रथयोगा' रथे योज्यन्त इति रथयोगा अश्वादयश्च न सन्ति । 'न च पन्थानो' राजमार्गाश्च भवन्ति । अथ च रथान् रथयोगान् पथश्च स्वय सृजते । तेन अत्राय पुरुष. स्वयज्योतिर्भवतीति सिद्धम् ।

स्वाराज्यमिदमपूर्वम्।
सम्प्रति नीतोऽस्मि देशिकेन्द्रदृशा ३८
देशिककटाक्षशशिरुचि-।
लेशं सिद्धाञ्जनेन कस्तुलयेत्॥

---

न रथ इति। सम्प्रति भाग्योदयकाले। देशिकेन्द्रदृशा श्रीमदाचार्यवर्यदयादृष्ट्या इदं अनुभूयमानम्। स्वाराज्यं स्वयमेव राजत इति स्वराट् स्वप्रकाशपूर्णानन्दैकरसः सद्भावं सार्वभौमत्वं च अपूर्वं कारणं यस्य तत्।"अपूर्वमनपरमनन्तरमबाह्यम्।"इतिश्रुतेः। प्रसिद्धस्वाराज्यविलक्षणं वा अनुभूतपूर्वं च। रथःशरीरं प्रसिद्धश्च. हयाः इन्द्रियाणि अश्वाश्च, नास्ति अर्थः शब्दादय इन्द्रियविषया धनं च नास्ति।रथादित्रये जात्येकवचनम्।"शरीरं रथमेव तु।इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्"इतिश्रुतेः। शक्तिश्च गुणाश्च शक्ति-गुणाः शक्तिर्माया।"देवात्मशक्तिं स्वगुणैर्निगूढाम्"इतिश्रुतेः। गुणाःसत्वादयः न सन्ति।अन्यत्र शक्तयश्च गुणाश्च शक्ति-गुणाः शक्तयः प्रभु-मन्त्रोत्साहशक्तयः गुणाः सन्धि-विग्रह-यानासन-द्वैधीभाव-समाश्रयलक्षणाः षड्गुणाः न सन्ति। दूरं प्रतिकूलवेदनीयं दुःखं तस्य वार्ता वृत्तान्तोऽपि नास्ति। अत्र दुर्गाणां स्थल-जल-गिरि-वनलक्षणानां वार्तापि कथापि नास्तीत्यर्थः॥ ३८॥

अनितरसाध्यस्य परमपुरुषार्थस्यानायासेन सद्यः साधकत्वादनन्यसाधारणाप्रतर्क्यमहाप्रभावः श्रीगुरुकटाक्ष इति दर्शयति। देशिकेति। देशिककटाक्षशशिरुचिलेशं देशिकस्य श्रीगुरोः कटाक्ष

योऽज्ञः करोति करगत ।
मञ्जनदूर समग्रमात्मधनम् ॥ ३९ ॥
सान्द्रं समार्प्य गुरवे ।
सपदिसदेहं विदेहसौख्यमपि ॥
जनकश्चकार निष्क्रय- ।
साम्यं शब्देन नार्थलेशेन ॥ ४० ॥

---

एव शशिरुचिश्चन्द्रिका तस्या लेशं सिद्धाञ्जनेन निधिदर्शनसाधनेन अञ्जनविशेषेण करतुलयेन् उपमिनुयात । अतिधवलायाश्चन्द्रिकाया मलिनेनाञ्जनेन साम्याभावादिति भावः । रूपतः साम्याभावेऽपि कार्यतः साम्यमस्तीत्याशङ्क्याह । यःअञ्जनदूरं निरञ्जनं अञ्जनैः प्रकाशयितुमशक्यं च समग्रं पूर्णं आत्मधन आत्मलक्षण धनं अज्ञः अनायासेन करगतं करतलामलकवत्सान्दिग्धापरोक्षं हस्तप्राप्तं च करोति कुरुते । सिद्धाञ्जनं हि स्वविषयेन परिमितमेव धनं खननाद्यायासेनैव प्रकाशयति अय तु तद्विलक्षण इति भावः ॥ ३९ ॥

आचार्यकृतस्योपकारस्य शरीरं सर्वस्वमपि न निष्क्रयः कृतनत्याप्नुत्तये । परं स्वस्वार्पणपूर्वकं तदास्यं यावज्जीव कार्यमिति जनकाख्यानेन दर्शयति । सान्द्रामिति ।

जनकस्तन्नामको राजा गुरवे ब्रह्मविद्योपदेष्ट्रे याज्ञवल्क्याय

सान्द्रं समग्रं सदेहं देहसहितं विदेहसौख्यमपि विदेहा नाम ज-नपदास्तन्मयं सौख्यमपि। सपदि विद्याप्राप्तिसमकालमेव सम-र्प्य निवेद्य "सोऽहं भगवते विदेहान्ददामि मां चापि सह दास्याय" इति श्रुतेः। शब्देन सदेहं विदेहसौख्यमेवंरूपेण निष्क्रयसाम्यं निष्क्रयो विद्यामूल्यं तस्य साम्यं चकार कृतवान्। अर्धलेशेना-पि न चकारेत्यर्थः। जीवद्दशायामेव वस्तुतः शरीररहितं कैवल्य-सुखमपरिच्छिन्नमर्पितवते श्रीगुरवे शरीरसाम्राज्यसुखं परि-

---

१ अथेदमनुसंधेयम्। ऐक्ष्वाकवस्य राज्ञो निमेर्वसिष्ठशापाद्गुरुनष्टशरी-रस्य अराजकभयीद्विभिर्ऋषिभिर्मथ्यमानाद्देहात्पुत्रोऽजनि। स च।

जन्मना जनकः सोऽभूद्वैदेहस्तु विदेहजः।
मिथिलो मथनाज्जातो मिथिला येन निर्मिता॥
[भा॰ ९।१३।१३]

तदैवं विदेहसंज्ञकस्य राज्ञः नाम्ना प्रसिद्धा जनपदा अपि विदेहसंज्ञकाऽभू-वन्निति। तेषां विदेहानां राजा जनकः 'बहुदक्षिणेन यज्ञेनेजे। तत्र ह कुरुपा-ञ्चालानां ब्राह्मणा अभिसमेताः बभूवुः'। तदा 'तस्य ह जनकस्य वैदेहस्य जिज्ञासा बभूव। कःस्विदेतेषां ब्राह्मणानामनूचान इति। स ह गवां सहस्र-मवरुरोध। दश दश पादा (पलस्य चतुर्थोऽशः) एकैकस्याः शृङ्गयोराबद्धा बभूवुः। अथ 'तान्होवाच। ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः [illegible] एता गाः' [illegible] गृह्ण नयत्विति तदाऽन्येषु ब्राह्मणेषु असमुद्यत्सु याज्ञवल्क्यः स्वमेव ब्रह्मि-ष्ठमुक्त्वा ता जगृहे। अथेतरे ब्राह्मणाः क्रुद्धास्तं विवादयां चक्रुः। अनन्तरं ज-नको वैदेह आसां चक्रे। तं याज्ञवल्क्यो विद्यामुपदिदेश। अथ विदितवेद्य स राजा "यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मीति" दासभावेन स्वात्मानं राज्यं च निवेदयामासेति दिक्। विस्तरस्तु बृहदारण्यके षष्ठेऽध्याये द्रष्टव्य इत्यलं विस्तरेण।

चिरवर्धिता बुभुक्षा ।
शंके कालेन समजनि मुमुक्षा ॥
या खलु मम चित्कुक्षौ ।
युगपत्त्रैलोक्यकवलगिलनपरा ॥ ४१ ॥

---

च्छिन्नमर्पितवता जनकेन 'सदेहं विदेहसौख्यं' इति शब्दत एव निष्क्रयसाम्यं कृतम् । अर्थांशे तु लेशतोऽपि न कृतमिति भावः ॥ ४० ॥

तत्त्वज्ञस्य नैव जगत् प्रतिभासते । कदाचित् कथंचिद्भासमानमप्यपरिच्छिन्नस्वरूपचैतन्यग्रस्तमत्यल्पमसत्कल्पमवभासत इति विद्वदनुभवमभिनयति ।

चिरवर्धितेति । चिरं अनादि कालादारभ्य वर्धिता पुनः पुनः कामोपभोगैर्वृद्धिं प्रापिता । उक्तं हि ।

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

इति । अर्थान्मम बुभुक्षा भोगेच्छा क्षुत् च । कालेन अनेकजन्मसञ्चितसुकृतपरिपाकनिदानमहिम्ना मुमुक्षा समजनि मोक्षेच्छात्मना परिणतेत्यर्थः । शङ्के इत्युत्प्रेक्षा । उक्तार्थे मुमुक्षाया बुभुक्षाधर्मवत्त्व प्रमाणयति । या खल्विति या मुमुक्षा मम चित्कुक्षौ चिदेकस्वरूपज्ञप्तिरेव कुक्षिः यावल्लोकव्यावकाशदातृत्वात् । तत्र युगपत् अक्रमेण यत् त्रैलोक्यलक्षणस्य कवलस्य गिलनं गिरणं तदेव फलं यस्याः सा । खल्विति निश्चये । भवति हि घटादौ मृद्भगन्धादिदर्शनेन मृत्परिणामत्वसम्प्रत्यय इति भावः ॥ ४१ ॥

कथनीयमिह किमधुना ।
कश्चिदकाण्डे महानभूत् प्रलयः ॥
स्वनिहितदृशि मयि किंचित् ।
सपदि चिदेकार्णवीकृतं भुवनम् ॥४२॥

---

वैज्ञानिकप्रलयस्य नित्य-दैनन्दिन-प्राकृताख्यप्रलयत्रयादनियतकालत्वमपुनर्भवहेतुत्वं चेत्यतिशय दर्शयति ।

कथनीयमिति । देहस्वरूपे प्रलये च अधुना ज्ञानदशायां किं कथनीयं किम् वक्तव्यम् । परमाह्लादपारवश्येन वाचः कुण्ठीभावात् , अवाङ्मनसगोचरत्वात्, अत्याश्चर्यरूपत्वात्, कथाकथक-कथनीयाद्यभावाच्चेति भावः । अकाण्डे अनवसरे । कश्चित् त्रिविधपरिच्छेदविलक्षणत्वादपूर्वः । महान् अपुनर्भवहेतुत्वात् प्रलयः सविलासमूलाविद्याप्रतियोगित्वात् प्रकृष्टो लयः अभूत् ॥ सहेतुकं तमेवोपपादयति । मयि किंचिदित्यनायासोक्तिः ज्ञानप्रभावोक्तिर्वा । स्वनिहितदृशि स्वस्मिन् प्रत्यग्ब्रह्मणि निहिता प्रवर्तिता दृक् वाक्यजन्याखण्डाकारवृत्तिरूपा येन । तथाविधे सति सपदि सद्यः भुवनं जगत् चिदेकार्णवीकृतं चिल्लक्षण एकः अद्वितीयोऽर्णवः समुद्रस्तद्रूपतयाऽऽपादितम् । मयि स्वात्मानमीषत् पश्यति सति अकस्मादेव सर्वजगत्प्रलयोऽभूत् । इदमदृष्टश्रुतचरं अत्याश्चर्यमिति लोकोक्तिः स्फुटा ॥ ४२ ॥

क्वापि गतायां माया- ।
कादम्बिन्यां क्षणेन मतिशरदि ॥
स्तिमितश्चिदब्धिरात्मा ।
शमितब्रह्माण्डबुद्बुदकदम्बः ॥ ४३ ॥

ननु—अनन्तरोक्तत्वाविद्यालयस्य घटादिलयवत् स्वकारण-तिरोधानरूपत्वात् । आत्मनश्च कूटस्थस्य तत्कारणविद्यान्तर-प्रसक्तिः—इत्याशङ्कामपनुदन् निवृत्ताविद्यस्वरूपं दर्शयति ।

क्वापीति । मतिशरदि मतिः वाक्यजन्यवृत्तिः सैव शरत् प्रसन्नत्वात् । तस्यां सत्यां मायाकादम्बिन्यां मायैव कादम्बिनी मेघमाला मलिनत्वात् आवरकत्वाच्च । तस्यां क्षणेन क्वापि गतायां सत्याम् । अनेनाविद्यायास्तिरोधानस्थलस्य प्रमाणतो ऽनुपलम्भात् तत्कल्पनायामनवस्थानादनिर्मोक्षप्रसङ्गात् " न स पुनरावर्तत " इति श्रुतिविरोधाच्च न तल्लयः कारणतिरोधानल-क्षणः । येनाविद्यान्तरप्रसक्तिः । किन्तु बाध एवेति दर्शितम् । चिदब्धिःचित्समुद्रः आत्मा उक्तमतिविषयीकृतः प्रत्यगात्मा । शमितब्रह्माण्डबुद्बुदकदम्बः शमितानि ब्रह्माण्डानां बुद्बुदानां कदम्बानि यस्मिंस्तथाविधःसन् । स्तिमितःनिश्चलःनिर्विक्षेप इति यावत् । कारणनिवृत्तौ कार्यनिवृत्तेरवश्यम्भावादिति भावः॥ ४३ ॥

आत्मन्यज्ञाते जगति किञ्चिदपि तत्वतो न ज्ञातम् । ज्ञाते तु तस्मिन् सर्वमपि साक्षात्तत्वतो ज्ञातम् । ज्ञातव्यतत्वान्तरा-भावादिति दर्शयति ।

स्वकलङ्कलज्जितमिव ।
व्यवहितमासीत् पुरा जगत्सकलम् ॥
अधुना त्वदोषदर्शीति ।
किममदन्यत्स्फुरति चित्सुखैकरसम् ॥४४॥

---

स्वकलङ्केति सकलं । समस्तं जगत् । पुरा ज्ञानात्पूर्वं । स्वकलङ्कलज्जितमिव स्वस्य कलङ्कःस्वकलङ्कः अनृत-जड-दुःखाद्यात्मकरूपो दोष तेन लज्जितमिव । व्यवहितं तत्वतास्तिरोहितं आसीत् अभूत् । अधुना स्वात्मानुभवकाले तु अहं अदोषदृक् अविद्यादिदोषरहितचित्स्वरूप· अदोषदर्शी च इति । किं इति हेतौ । किमिति वितर्के । अमदन्यत् प्रत्यगव्यतिरिक्तं सत् । अत एव चित्सुखैकरस स्फुरति अपरोक्षतया तत्वत· प्रकाशते । "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितं भवति" इति श्रुतेः । "यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते" इति स्मृतेश्च । लोके हि पुमान् यावद्दोषदर्शी भवति तावदेव सदोषास्ततो लज्जितास्तिरोभवन्ति । तस्य दोषदर्शित्वापगमे तु नि·शङ्कं स्निह्यन्तीति प्रसिद्धम् ॥ ४१ ॥

ननु—जडानृत दुःखरूपस्य जगतः कथं प्रत्यगभेदेन चित्सुखैकरसता ? प्रतीच एव जडाद्यात्मताया अपि प्रसक्तेः—इत्याशङ्क्याह ।

जडमनृतमार्तिरूपम् ।
जगदिति बाल्ये मुधा मया त्यक्तम् ॥
अधुनाऽद्भुतस्वचिन्मय-
मधुररमायां विलीनमेकरसम् ॥ ४५ ॥
फेन-तरङ्गविहिनः ।
परिहितकलुषः स्वसुखचिदेकरसः ॥

---

जडमिति । मया बाल्ये मननकाले शैशवे च । जगत् जडं अनृतं आर्तिरूपं दु खरूपमिति बुद्ध्या वृथा त्यक्तं अनात्मेति पृथक्कृत्योपेक्षितम्। अधुना तत्वसाक्षात्कारकाले। अद्भुतस्वचिन्मयमधुररमायां अद्भुता अनितरसाधारणस्वभावत्वादतिविस्मयावहा स्वचिन्मयी मत्स्वरूपचिद्रूपा। स्वार्थे मयट्। मधुरा परमानन्दरूपत्वादनवरतमास्वादनार्हा। रमेव रमा अर्थादानन्दाकर.। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुते.। तस्यां विलीनं सत्। एकरसं आनन्दैकस्वरूपम्। आस्त इति शेष॰। प्रसिद्धं हि लवणाकरान्तः पाति तृण-काष्ठादि सर्व लवणात्मक भवति। न तु लवणाकरस्तृणाद्यात्मक इत्यतो नोक्तशङ्काऽवकाश इति भाव: ॥ ४५ ॥

ननु-नैय्यायिकमते कपालाद्युपादाननाशेऽपि क्षणमुपादेयघटाद्यनुवृत्तिवदविद्यानाशेऽपि तदुपादेयसूत्रादिप्रपञ्चस्यानुवृत्तिसम्भवात् तत्वज्ञानां च व्यवहारदर्शनात् कथ उक्तचिदेकरसपरिशेषः—इत्याशङ्क्याह ।

स्वैरमपारावारः ।
पारावारोऽयमतति परमेकः ॥ ४९ ॥

---

फेन-तरङ्गेति । फेन-तरङ्गविहीनः फेन-तरङ्गाभ्यां विहीनः विशेषणरहित । तत्र हेतुमाह । परिहितेति । परिहितं कलुषं कल्मषं यस्मिन् स । अत्र चिदात्मनः समुद्रत्वेन निरूपणात् फेन-तरङ्ग-कलुषशब्दैः विराट् सूत्राव्याकृतानि उत्तरोत्तरमान्तरतम्यान्निगीर्याध्यवस्यन्ते । तथा चाव्याकृतान्तत्रितयशून्यः । अत्र फेनेत्यादिना विराट्-सूत्रयोः कार्यत्वेन साधर्म्यात्समस्योपादानम् । स्वसुखचिदेकरसः स्वरूपात्मकं यत्सुखं तदभिन्ना या चित् सैव एको रसः स्वभावः जलं च यस्य स । अपारावारः पूर्वोत्तरावधिशून्यः अनादिरनन्तश्चेति यावत् । समुद्रपक्षे तु अपारावारः न विद्येते पारावारे परावरितीरे यस्य स तथोक्तः । अयं अपरोक्षमनुभूयमानः । एकः अद्वितीयः । पारावारः आत्मलक्षणः समुद्रः । स्वैरम् अप्रतिबन्ध इति क्रियाविशेषणम् । अतति व्याप्नोति परः एकः । अयमाशयः । उपादानोपादेययोर्हि भेदमवलम्ब्योपादाननाशेऽप्युपादेयस्य क्षणमवस्थितिः आस्थिता नैय्यायिकैः । न च तद्भेदः प्रामाणिकः । मृत् घटः सुवर्णं कुण्डलमित्यादिप्रयोग-प्रत्ययाभ्यां तदभेदसिद्धेः । न च तयोर्भेदेऽपि समवायसम्बन्धात्तथाप्रयोग-प्रत्ययौ इति वाच्यम् । समवायस्य सम्बन्धत्वासम्बन्धत्वविकल्पासहत्वेन अप्रामाणिकत्वात् । सम्बन्धत्वे तस्यापि सम्बन्धान्तरमित्येवमनवस्थानात् । असम्बन्धस्य च सम्बन्धप्रतीत्यप्रमाणिकत्वात् । अन्यथा संयोगस्याप्यसम्बन्धत्वापत्तेः । अभ्युपेतेनापि तेन संयोगेनेव सामानाधिकरण्यप्रतीत्यनिर्वाहेन तदभ्युपगमवैयर्थ्याच्च । अत उपादानोपादेययोस्तादात्म्यावश्यम्भावादुपादाननाशे

तदुपादेयस्थितेरप्रसक्तेः । तत्त्वज्ञानेन संसारोपादानाज्ञाननाशे सति न संसारानुवृत्तिप्रसङ्गः । ज्ञानिनां व्यवहारस्तु अविद्यालेशेनाप्युपपन्नः । न च-ज्ञानेन तस्यापि निवृत्तिः स्यात्-इति वाच्यम् । "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यते । तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं१ शरीरं शेते । यथायमशरीरोऽमृतप्राणो ब्रह्मैव तेज एव" इति च श्रुतेः प्रारब्धप्रतिबन्धेन यावच्छरीरं तदनुवृत्तिस्वीकारादिति ॥ ४६ ॥

इयता प्रबन्धेन परीक्षकदृष्टिमवष्टभ्य अज्ञानाद्बन्धो ज्ञानान्मुक्तिः तत्र बन्धस्यानिर्वचनीयत्वमित्यादि सपरिकरमुपवर्णितम् । इदानीं 'भोगस्तु सखे खपुष्पमेतस्य' इत्यत्र सूचितं श्रौतीं दृष्टिमाश्रित्य सनिदानं बन्ध-मोक्षयोः सच्चिदानन्दाद्वितीयपूर्णात्मस्वरूपे कालत्रयेऽपि नास्ति सम्भावनेति तयोस्तुच्छत्वमाह ।

---

१ कथ पुनः समवनीतेषु प्राणेषु देहे च स्वकारणे प्रलीने विद्वान् मुक्तस्तत्रैव सर्वात्मा सन् वर्तमानः पुनः पूर्ववद्देहित्व संसारित्वलक्षण न प्रतिपद्यते इत्यत्राय दृष्टान्तः । 'यथा' लोके 'अहिः' सर्पः तस्य 'निर्ल्वयनी' निर्मोकः । सा हि निर्ल्वयनी 'वल्मीके' सर्पाश्रये वल्मीकादावित्यर्थः । 'प्रत्यस्ता' प्रतिक्षिप्ता अनात्मभावेन सर्पेण परित्यक्ता 'शयीत' वर्तते । एवमेव यथाय दृष्टान्तः इदं शरीर सर्पस्थानीयेन मुक्तेन आत्मना अनात्मभावेन परित्यक्त मृतमेव शेते । 'अथ' इतरः 'अय' सर्पस्थानीयो मुक्तः सर्वात्मभूतः सर्पवत्तत्रैव वर्तमानोऽपि 'अशरीरः' एव । न पूर्ववत्पुनः सशरीरो भवति । कामकर्मप्रयुक्तशरीरात्मभावेन हि पूर्वं सशरीरो मर्त्यश्च । तद्वियोगादिदानीमशरीरः । अत एव न 'अमृत.' । 'प्राण.' प्राणतीति प्राणः । "प्राणस्य प्राण" "प्राणबन्धन हि सौम्य मनः" इत्यादिश्रुत्यन्तरात् प्रकरणवाक्यसामर्थ्याच्च प्राणशब्देन पर एवात्मा । 'ब्रह्मैव' परमात्मैव । किञ्च पुनस्तत् । 'तेज एव' विज्ञान ज्योतिः । येनात्मज्योतिषा जगदिदं भास्यमान प्रज्ञानेत्र_ विज्ञानज्योतिष्मदस्तु । अविश्रेश द्वर्तते इति श्रुत्यर्थः ।

समसरमिति निरविदमिति ।
समतरमिति च सहजसान्द्रसुखे ॥
केवलचिद्गगने मयि ।
केयमहो विफलबहुविकल्पलता ॥ ४७ ॥

---

समसरमितीति । सहजसान्द्रसुखे नित्यसिद्धनिरतिशयानन्दस्वरूपे केवलचिद्गगने कालत्रयेऽप्यतत्सम्बन्ध-तत्कार्यलक्षणकालुष्यशून्यचिदाकाशस्वरूपे । इह स्वत एवापरोक्षतया प्रकाशमाने मयि प्रत्यग्ब्रह्मणि । समसरं अनादिकालादारभ्याऽसंख्यातजनन-मरणप्रवाहपरम्परालक्षणं संसारमन्वभवम् । निरविदं अहो असत्यस्तीव्रतरविविधदुःखज्वालाजटिलः संसारदावानलः । कथं नु खल्वस्मान्महासङ्कटात् विमुच्येयेति प्रदीप्तशिरा इव जलराशिं विविक्षुरैहिकामुष्मिकसकलविषयविमुखः सद्गुरुशरणागतिपर्यवसायिनं वैराग्यापरपर्यायं निर्वेदं प्राप्तवानभवम् । इतिशब्दत्रयं तत्तत्प्रकारार्थकम्। चकार उदाहरिष्यमाणश्रुत्युक्तप्रकारांतरसमुच्चयार्थः । इयं प्रतीयमाना विफलबहुविकल्पलता विफलानां विषयशून्यानां बहूनामसंख्यानाम् । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति पातञ्जलोक्तलक्षणचित्तविशेषाणाम् । लतेव लता परम्परा । तथा च श्रुतिः ।

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥

इति । उक्तं च वार्तिके ।

तत्वमस्यादिवाक्योत्थ सम्यग्धीजन्ममात्रतः ।
अविद्यासहकार्येण नासीदस्ति भविष्यति ॥

इत्थं श्रुतिशतशिरसाम् ।
अर्थं विदुषा हितं मितं गदितम् ॥
आकर्ण्य सपदि विगलित-
शोकः स सखा सुखार्णवनिमग्नः ॥ ४८ ॥

---

इति । अन्यत्र विफला फलशून्या बहुभिर्विविधैः बहुविहगयुक्ता कल्पवाल्लिकेति सर्वथाप्यसम्भावितेत्यर्थः । अहो इत्याश्चर्ये । असम्भाविता हि गगनलता । सा च कल्पलता विफलेति सुतरामसम्भाविता । तस्यां च बहुविहगवत्त्वमतितरां तथेत्याश्चर्यमिति भावः ॥ ४७ ॥

प्रकान्तविद्वत्सखिसंवादस्य मुक्तिफलपर्यवसायित्वप्रदर्शनमुखेनास्य प्रकरणस्य तात्पर्यावसायित्वं दर्शयन्नुपसंहरति ।

इत्थमिति । 'इत्थं चित्रमकृत्रिमं' इत्यादि 'समसरं' इत्यन्तश्लोकसन्दर्भैरुक्तप्रकारेण विदुषा "श्रोत्रियं ब्रह्मनिष्ठं" इत्युक्तलक्षणेन श्रीगुरुणा मितं संक्षिप्ताक्षरं यथास्यात्तथा गदितं व्यक्तमुपदिष्टम् । हितं परमपुरुषार्थरूपत्वादत्यन्तमनुकूलम् । श्रुतिशतशिरसां शाखाभेदैरपरिमितानां शिरांस्युपनिषदस्तेषाम् । अर्थं तात्पर्येण प्रतिपाद्यं प्रत्यग्ब्रह्मैक्यलक्षणमखण्डार्थम् । आकर्ण्य । सः पूर्वोक्तः सखा परमप्रियाशिष्यः । सपदि मुख्याधिकारित्वात् श्रवणसमनन्तरकालमेव । विगलितशोकः ध्वस्ताऽशेषाऽविद्यातत्कार्यलक्षणानर्थः सन् । सुखार्णवनिमग्नः सुखार्णवे आनन्दसमुद्रे ब्रह्मणि निमग्नः आत्यन्तिकाऽभेदलक्षणं कैवल्यं प्राप्तोऽभूत् । तथा च श्रुतयः । "तरति शोकमात्मवित् । यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नाम-रूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् " ॥ ४८ ॥

इति सुखचिदात्मवस्तुनि ।
कुतुकादतिमन्दमपि मया गीतम् ॥
कलभाषितं शिशोरिव ।
फलयतु हर्षं सतामभीक्ष्णमिदम् ॥ ४९ ॥

---

इदानीं स्वकृतं प्रकरणं मद्भिरुपादेयमिति सविनयं प्रार्थयते ।

इति सुखेति । इति उक्तप्रकारेण मया सुखचिदात्मवस्तुनि सुखं परमानन्दः तद्रूपा या चित् शुद्धचैतन्यं तल्लक्षणो य आत्मा आप्नोति व्याप्नोति विश्वमधिष्ठानभावेन भुजगमिव रज्जुरिति वा, आदत्ते स्वस्मिन् उपसंहरति सर्वं साक्षिरूपेणेति वा, अत्ति ग्रसति स्वचैतन्येन सविषयसंवधीवृत्तीरिति वा, अतति सन्ततो भवति पूर्णभावेनावतिष्ठति वा आत्मा । तदुक्तं भगवता श्रीव्यासेन ।

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते ॥

इति । व्याख्यातं चैतत्तत्रभवद्भिर्वार्तिककारैः ।

व्याप्नोत्यनवशेषेण सर्वादीन् स्रगिवाखिलान् ।
प्रत्यक्तयाऽनात्मनोऽतः प्रत्यगात्मेति भण्यते ॥
स्वचिदाभासमोहेन तद्वत्यानखिलान्यतः ॥
आदत्तेऽनात्मनः प्राज्ञो ततश्चात्मेति तं विदुः ॥
स्वात्माभासाः पराचीना धीवृत्तीर्विषयोन्मुखाः ।
प्रत्यगत्ति यतोऽतोऽसावात्मेत्युक्तो मनीषिभिः ॥
अव्यावृत्ताननुगतः पूर्णः स्वात्मन्यवस्थितः ।
यतोऽस्य सन्ततो भावस्तस्मादात्मेति शब्द्यते ॥

इति । तदेव वस्तु अबाधितं तत्त्वं तस्मिन्कुतुकात् निसर्गसु

# सिद्धान्तचन्द्रिका ।

श्रीरामसंयमीन्दोश् ।
शारदसमये गुरुप्रसादमये ॥
सिद्धान्तचन्द्रिकाऽजनि ।
सम्भूय पिबन्तु सत्हृदयचकोराः ॥ ५० ॥

---

दरवस्तुमाधुर्यास्वादनजनितकौतुहलातिशयपारवश्यात् । गीतं गीतिछन्दसा निबद्धमिदं पद्यकदम्बकम् । अतिमन्दमपि शास्त्रसाहित्योभयसारस्वतमहार्णवकूलङ्कषशेमुषीविशेषभूषितपुरुषधौरेयैरिह दृष्ट्या अत्यल्पमपि शिशोरर्भकस्य कलभाषितं अव्यक्तमधुरं भाषितं मुग्धवचनमिव । सतां "परगुणपरमाणून् पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः" इत्युक्तलक्षणानां सत्पुरुषाणां अभीक्ष्णं सन्ततं हर्षं अनुग्रहात् सादरमवलोकनेन सन्तोषं कलयतु जनयतु । प्रार्थनायां लोट् ॥ ४९ ॥

इत्थं महतः सम्प्रार्थ्य सम्प्रति ग्रन्थस्य सांप्रदायिकत्वद्योतनाय व्यवहृतिसौकर्याय च स्वनाम ग्रन्थनाम च निबध्नन् स्वकृतेरादरणीयत्वाय सदयान्प्रार्थयते ।

श्रीरामसंयमीन्द्वेति । सिद्धान्तचन्द्रिका सिद्धान्तस्य वेदान्तसिद्धान्तस्य प्रकाशकत्वाच्चन्द्रिका ज्योत्स्ना व्याख्यानकृतिरूपा गुरुप्रसादमये गुरोः श्रीदेशिकस्य प्रसादो निरुपाधिपरमानुग्रहस्तन्मये तद्रूप इत्यर्थः । गुरुर्महान् प्रसादः प्रसन्नता तत्प्रचुरे च । शारदसमये शरत्काले श्रीरामयतिमुख्येन्दोः श्रीरामानन्दनाम्ना प्रसिद्धस्य यतेः परमहंसपरिव्राजकस्य मुखलक्षणाच्चन्द्रादजनि प्रादुरभवत् । अथैतां चन्द्रिकां सत्हृदयचकोराः सत्हृदयाः शास्त्रसाहित्यरसिकास्त एव चकोराः जीवंजीवाः । सम्भूय परिष्कृत्य सन्धीभूय पिबन्तु सादरं कण्ठतः कृत्वा तदर्थमास्वादय-

निगुम्फेऽस्मिन् श्रीमद्गुरु चरणगम्भीरवचसाम् ।
मयौत्सुक्यादेते कतिचन पदार्थाः प्रकटिताः ॥
विचिन्वानाप्यन्तर्जलधिजठरे को नु कलयेत् ।
इयत्तां रत्नाना प्रचुरतरयत्नैरपि कृती ॥ १ ॥

महातामादरणीया ।
मनसि मदीयापि भवतु कृतिरेषा ॥
न कथं धत्तूरकुसुममालाम् ।
धत्ते किमीश्वरोऽपि भक्तस्य ॥ २ ॥

क गभीर गभीर सूत्रविकृतिः ।
काहं बालस्तथापि कृतिरेषा ॥
श्री गुरुसदय कटाक्षात् ।
साहाय्याद्वरदराजविदुषश्च ॥ ३ ॥

---

न्तु आकण्ठमास्वादयन्तु च । अत्र "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते । वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्त्यध्येतारश्च मङ्गलयुक्ता यथा स्युः" इति वचनात् आदौ 'श्रीरामभद्र' इति, मध्ये 'श्रीगुरुमूर्ति' इति, अंते 'श्री गुरुप्रसादमय' इति आदिमध्यावसानेषु गुरुस्मरणलक्षण मङ्गल ग्रन्थस्य प्रचयगमनाय मध्ये श्रोतृणामायुराद्यभिवृद्धये परमपुरुषार्थसिद्धये च कृतमिति मन्तव्यमिति सर्वं शिवम् ।

इति श्री गङ्गाधरमरस्वतिविरचित सिद्धान्तचन्द्रिकोद्धार समाप्तिमगमत् ॥ शुभ वितनुयादीश ॥

मुद्रितमेतन्मुम्बय्यां गोपालनारायणजनतया स्वर्कीये मुद्रालये ।